॥ श्रीः ॥



# श्रीवेङ्कटनाथोजयतु

श्रियःकान्तायनमः ॥ श्रीमतेविष्वक्सेनायनमः ॥ श्रीमतेरामानुजायनमः ॥ श्रीमदनन्तार्यमहागुरवेनमः ॥ श्रीमतेवरवरमुनयेनमः ॥ ॥ श्रीवेङ्कटाद्रिनिलयः कमलाकामुकःपुमान् । अभङ्गुरविभूतिर्नस्तरङ्गयतुमङ्गलम् ॥ १ ॥ आनंदनिलयभवनोवेङ्कटगिरिशिखरशेखरःकोपि । अखिलफलदर्शनस्तापंकमलाकरस्सदाहरतु ॥ २ ॥ भवजलधिकुम्भयोनिः श्रीमान्रामानुजोमुनिर्जीयात् । प्रससादवेदसलिलंकुदृष्टिकलिलंकिलोदयाद्यस्य ॥ ३ ॥ श्रीमान्वैदिकमार्गकण्टकसमुद्धारैकदीक्षाधरोयश्श्रीवेङ्कटशैलनाथकरुणापूरेपयोमानुषः । श्रीरामानुजयोगिपादकमलस्थानाभिषेकंगतोजीयात्सोयमनन्तपूरुषगुरुस्सिंहासनाधीश्वरः ॥ ४ ॥ श्रीमद्वेदमार्गप्रतिष्ठापनाचार्योभयवेदान्ताचार्य श्रीमत्परमहंसपरिव्राजका

चार्य श्रीभगवद्रामानुजमुनिसंस्थापितश्रीवेङ्कटाद्रि
श्रीमदनन्तपूरुषाचार्यसिंहासनासीनश्रीरङ्गाचार्याः
कस्यचिद्वादिनो दुर्वादपरिहाराय घूर्जरदेशालङ्कार
भूतपाटणानामकनगरं प्राप्ता इमम्भगवन्धर्मदर्पणभू
तं विचारमखिलजनेभ्यः ख्यापयन्ति = ॥ ५ ॥ अस्मि
न् घूर्जरदेशे द्वारकामठशङ्कराचार्य इत्यात्मानं ख्या
पयन् परिव्राजकलिङ्गी राजराजेश्वरशङ्कराश्रमना
मा कश्चनवादी समन्ततः पर्यटन् ब्राह्मणान् बाधमा
नो द्रव्यसम्पादनैककामो वर्तते ॥ ६ ॥ इमं वृत्तान्तमा
कर्ण्य दक्षिणदेशस्थ शृङ्गगिरिशङ्कराचार्यस्थानाधि
पतिभिः - नायं शङ्कराचार्यपदाधिपतिः - एतस्मैता
दृशाबुद्ध्यायेब्राह्मणास्सपर्यादि कुर्वन्ति - ते गुरुद्रो
हपातकिनोऽवश्यंभवेयुरिति प्रसिद्धिपत्रिकाभिस्स
मन्ततः प्रख्यापि वृत्तान्तः ॥ ७ ॥ एवमपीदृशवृत्तान्त
वास्तवानभिज्ञान्मन्दमतीन् विप्रान्मोहयन्नेवायमस्ति
॥ ८ ॥ सएषवादी घूर्जरदेशस्थ पाटणानामनगरे धना
र्जनपरायण आगत्यात्रत्यान् वैष्णवजनान् व्यामोह
यामास - श्रीरामानुजमुनिसम्प्रदाये तस्य च काङ्क्षना

दिधर्मा अवैदिकाः - अस्मिन् विषये विचाराय भवदी
यसंप्रदायाचार्यपदस्था आवाह्यन्ताम् - अवैदिक
त्वं स्थापयिष्यामइति ॥ ९ ॥ ततश्चैतैर्वैष्णवैः खिन्नैः
श्रीवेङ्कटाद्रित आवाहिताःपूर्वोक्ताः श्रीरङ्गाचार्याद
हागत्य पूर्वोक्तंराजराजेश्वर शंकराश्रमनामानंपरि
व्राजकलिङ्गि नंवादिनं प्रतिपत्रिकामेवमभि प्रार्थि
कां प्रेषितवन्तः - वयं श्रीभगवद्रामानुजमुनिसम्प्रदा
यमेव कार्तयुगपरम वैदिकधर्मं बादरायणादि परम
र्षिसम्मतं स्थापयितुं नदितर भवदीयमतमन्तिमयु
गतस्वचिन्तक कुदृष्टिकल्पित मर्वाचीनमितिस्था
पयितुं चसन्नद्धास्स्मः - यद्बलमाश्रित्य तप्तचक्रा
ङ्कनादिधर्माणामवैदिकत्वं भवताकथितम् - तद्ब
लंप्रदर्शय- नोचेद्भवदीयमपण्डितत्वं सर्वतोमु
खं विदितं भवेदिति ॥ १० ॥ तामेतां पत्रिकां त्रिवारं प्रे
षितामपि प्रत्युत्तरलेखना सामर्थ्यजनितभियाऽयं
वादीनैवागृह्णात् ॥ ११ ॥ शास्त्रविचारवार्तां शस्त्रप्र
चारवार्तामिव मन्वानोऽयं सर्वतो भग्नप्राक्तनगर्वग
र्जनो बहुवारं वादायाहूतोऽपि तूष्णीक एवासीत् ॥ १२

ततः कतिपयदिनानन्तरमयंवादी-इत्थंतूष्णीकृत्वेलो
कानां परिहासपात्रमहं भवेयमिति विचार्य-कथञ्चनवै
तण्डिकसरण्यावादमहारण्यप्रवेशसङ्कटान्निर्जिगमि
षुः कतिपयमध्यस्थजनद्वारा पूर्वोक्त श्रीरङ्गाचार्यस
न्निधाविमंवृत्तान्तंसन्दिदेश-भवन्तः श्रीवैष्णवधर्मा
चार्यपीठस्थायिनोवानवेति निर्णयमन्तरेण भवद्भि
स्सह नवयं शास्त्रार्थविचारं कर्तुमङ्गीकरिष्यामः-अ
तः प्रथमंतन्निर्णयेन भवितव्यमिति ॥१३॥ ततःपरंतै
श्श्रीरङ्गाचार्यैस्तेषामेवमध्यस्थानाम्मुखेनतं वादि
नंप्रतिमत्युत्तरमित्थंसन्दिष्टम्-वयंतु श्रीवैष्णव
धर्माचार्यपीठस्थायिन इत्ययमंशः-तदसाधारण
च्छत्रचामरादिचिह्नैरस्मत्सम्प्रदायस्थसर्वजनैर्नि
र्विवादंपीठाधिपत्यानुगुणमर्यादयासमन्ततस्सत्क्रि
यमाणतयाच भवतांस्फुटमवगन्तुंशक्यः-प्रत्युत
भवन्तोभवत्संप्रदायस्याचार्यपीठस्थायिनोनवेत्य
यमंशएवनैवज्ञातुंशक्यः-भवदीयैरेव बहुभिर्भवदु
पेक्षणात्-दक्षिणदेशस्य शृङ्गगिरिशङ्कराचार्यपी
ठाधिपतिभिः प्रसिद्धिपत्रिकाभिर्भवतां पीठाधिपत्या

भावस्यसमन्ततः ख्यापितत्वाच्च- तस्माद्भवदीयंपी
ठाधिपत्यमेवविवादविषयीभूतंनिर्णेतव्यंवर्तते-
नास्मदीयमितिगृह्यताम्- किञ्च- मतविप्रतिपत्तौ
वादिप्रतिवादिप्रसङ्गे पीठाधिपत्यसद्भावासद्भाव
प्रस्तावोयंभवतांस्वीयापाण्डित्यजनितभियावा
दमहारण्यसङ्कटाद्वैतण्डिकसरण्यानिर्गमनोद्योग
मेवच्चस्पष्टमवगमयति- ननुश्रीभगवद्रामानुजमु
निशङ्करप्रभृतयः पूर्वेप्रतिवादिकलभकण्ठीरवाई
दृशींप्रक्रियांक्वचित् कदाचिच्चक्रुः॥ तस्मात्सदसि
सम्मुखंप्रतिवादकरणनिपुणपाण्डित्यंयद्यस्ति- त
र्हिनिर्गच्छबहिः- नोचेत् कचित्कन्दरान्तरकुहरं
प्रविश- किंवृथावाग्जालेनेति ॥१४॥ ततः पुनर
पितेनवादिना- अस्मदीयपीठाधिपत्यविवादः प्र
शान्तः- भवदीयपीठाधिपत्यंतु निरूपणमन्तरेण
नविश्वसनीयंवर्ततइति वैतण्डिकसरण्यैवप्रति
सन्देशः प्रेषितः ॥१५॥ ततश्चपुनरपितैः श्रीरङ्गा
चार्यैस्तैरेवमध्यस्थैस्सन्देशः प्रेषितः- यदिवयंपी
ठाधिपतयोनभविष्यामः- यदिवावयंशास्त्रार्थेवि

चारंनकरिष्यामः-तदावयंद्विसहस्रीसङ्ख्याकानिरूप्या
णिभवतेदास्यामइति व्यवस्थापत्रिकाभवतेवयंदास्या
मः-ईदृशाव्यवस्थापत्रिका भवताऽस्मभ्यमपरादेया-मध्य-
स्थजनैश्चदक्षिणदेशस्थितास्मदीययुष्मदीयपीठाधिपति-
सकाशात्पत्रिकाआवाह्यपीठाधिपत्यनिर्णयःकर्तव्यःउभ-
येपिसत्यपराधेस्वस्वव्यवस्थापत्रानुरोधेनयथापराधंद
ण्डंलभंताम्- वयंतुभवतः पीठाधिपत्याभावेपिशा
स्त्रार्थविचारंभवतासहावश्यंकरिष्यामएवेति॥१६
॥ततोमूकवदयंवादीसुतरांनिरुत्तरमुखः- प
त्रिकाद्वारावाविचारःप्रस्तूयतामिति मध्यस्थजनै
र्बहुधा ज्ञापितोपि तस्यापिचनिरुत्तरएवाभूत्॥
॥१७॥ ततश्चतएतेश्रीरङ्गाचार्यास्तस्यैतस्यवादि
नस्सर्वप्रकारेण शास्त्रविचारे तूष्णीकतांसमन्ततः
ख्यापयन्तः प्रसिद्धिपत्रिकाः पाटणनामकेनगरेस
र्वत्रप्रदेशेसमासञ्जयन्तः कुत्रचित्सुप्रसिद्धस्थ
लेपञ्चषदिनेषुसभांकृत्वासर्वजनानावाह्य श्रुति
स्मृतीतिहासपुराणपञ्चरात्रादिभिस्तप्तचक्राङ्कना
दिधर्माणांप्रामाणिकतमत्वंप्रत्यपीपदन्॥१८॥

एवंश्रीरङ्गाचार्यैस्सभाकरणोपक्रमणानन्तरमयंवादी स्वजनान् क्वचित् समूह्य न मन्त्रकाङ्क्षनादि वैष्णवदीक्षाधर्माः क्वापिवेदेषुस्मृतीतिहासपुराणादिषुवा न सन्तीति केवलवार्तालापैर्व्यामूमुहत् ॥ १९ ॥ अनधीतविद्याः पशुप्रायाश्चैते कतिपयमुग्धजनास्तदीय वार्तालापं तथ्यंमन्यन्ते ॥ २० ॥ दिवान्धराजोहि दिवान्धकिशोरकानधिरजनि परिसरवर्तिन्चक्रवाककृत दिवाकरोदय कमलाकर विहार कलहंससमागमादि मनोरथालापश्राविणः - कोयंदिवाकरोनाम - केचवाकमलाकरानाम - कलहंसनामानोवाके - इति पृच्छतः - नखलु दिवाकरो नामकश्चित्काश्चिदृष्टः नापिकमलाकराः - नचकलहंसाइति प्रतिवदति ॥ ॥ २१ ॥ दिवान्धकिशोरकाश्चैतत्तथ्यंमन्यन्ते ॥ २२ ॥ नखलु दिवान्धाः कदाचिद्दिवाकरादि वृत्तान्तंस्वतः परतोवाऽवगन्तुं शक्नुवन्ति ॥ २३ ॥ नापिचक्रवाकास्तमसवृत्तान्तंज्ञातुं शक्नुवन्ति ॥ २४ ॥ कालद्वयविमोह विधुराः कलहंसाश्चकालद्वयवृत्तान्तं शक्नुवन्त्येवविज्ञातुम् ॥ २५ ॥ अतोनकोप्यर्थोऽपलपितुं शक्यः केन

न्वित् ॥२६॥ तथैवात्रापिसम्प्रत्युभयत्रसमवगाहनशी लामध्यस्थजनास्तु प्रामाणिकमर्थं यथावदेवविज्ञाय वादिनोपि केवलानभिज्ञतानिबन्धनकोलाहलमात्र-कारितानिर्णयमगमन्नेव॥२७॥ इत्यमेवामुमर्थंसार्वजनीनंराष्ट्रस्थेभ्यस्सर्वेभ्योजनेभ्योपिरव्यापयितुमयमारम्भः॥२८॥ ॥इतिभगवद्धर्मदर्पणनामनिविचारेयमुपोद्घातोनामप्रथमः परिच्छेदः॥

---

# अथभगवद्धर्मदर्पणनामनिविचारे

## द्वितीयपरिच्छेदः

अथभगवद्धर्मदीक्षावश्यकत्वंन्यायानुगृहीतप्रमाणगणैर्निष्पन्नयानिष्कृष्टयासरण्याप्रथमंसङ्क्षेपतो निरूप्यते॥१॥ सोध्वनःपारमाप्नोतितद्विष्णोःपरमंपदमिति= तद्विष्णोःपरमंपदंसदापश्यन्तिसूरयः। दिवीवचक्षुराततमिति= तद्विप्रासोविपन्यवोजागृवांसस्समिन्धते- विष्णोर्यत्परमंपदमितिच्चवेदेरुद्घुष्यतेहिसुस्पष्टम्- विष्णोरेवपदंसंसाराध्वनःपारभू

तमिति- तदेवचसर्वस्मात्परमंस्थानमितिच॥२॥इ
त्थंभगवतोविष्णोरेवसंसाराध्वपारभूतमुक्तिस्था
नभूतपरमपदस्वामित्वेसिद्धेसति तदुपासनमन्तरे
णानतत्पदप्राप्तिरूपामुक्तिः केनचिल्लब्धुं शक्येत्य
पिसिद्धंभवति॥३॥नखलुस्वामिनमप्रसाद्यतत्प
दंकेनचिद्गन्तुंशक्यम्॥४॥ अतएवहिश्रावयति-
वेदाहमेतमित्यारभ्य-तमेवंविद्वानमृतइहभव
ति- नान्यःपन्थाअयनायविद्यतइतिविश्रान्ताश्रु
तिः-जगत्कारणत्वादिगुणविशिष्टंनिरवधिक
ज्योतिर्मयदिव्यमङ्गलविग्रहसम्पन्नंतमसःपार
वर्तिनंपरमपुरुषंनारायणमुक्तरूपेणोपासीन
एवसिद्धमोक्षोभवति- नान्योमार्गोमोक्षायकश्चिद
स्तीति॥५॥ गीतास्वपितदिदमेवभगवतोक्तम्-
दैवीह्येषागुणमयीममामायादुरत्यया। मामेवयेप्र
पद्यन्तेमायामेतांतरन्तितइतिसप्तमाध्याये-ना
हंवेदैर्नतपसानदानेननचेज्यया। शक्यएवंविधो
द्रष्टुंदृष्टवानसिमांयथा। भक्त्यात्वनन्ययाशक्यअ
हमेवंविधोऽर्जुन। ज्ञातुंद्रष्टुंचतत्त्वेनप्रवेष्टुंचपरंतप

स्येकादशाध्यायेच ॥ ६ ॥ उक्तश्रुतिस्मृत्योरैकक
ण्ठ्याच्च भक्तिरूपमेव परमपुरुषवेदनम्मोक्षहेतुरि
तिसिद्धंभवति- अन्यथा- तमेवंविद्वानितिवेदनस्यै
वंरूपतावर्णनानावश्यकत्वात् ॥ ७ ॥ एवंरूपताहि
पूर्वोक्तगुणविग्रहविशिष्टविषयकत्वरूपा ॥ ८ ॥ भ
गवद्भक्तिश्च- स्वात्मानंनित्यदासंभगवन्तंच नि
त्यस्वामिनंयथावस्थितमनुसन्धाय प्रतिदिनंप्र
तिनियतदेशकालेष्वभ्यस्यमानासेतिकर्तव्यता
कार्चनापूर्विकाप्रीतिरूपापन्नातैलधारावदवि-
च्छिन्नास्मृतिसन्ततिः ॥ ९ ॥ अतएव च भक्तिर्दास्ये
तिकर्तव्यताकत्वेनदास्यरूपेणोपचर्यते ॥ १० ॥ य
थोक्तंबृहद्धारीतस्मृतौ प्रथमाध्याये- विष्णोर्दा
स्यंपराभक्तिरेषातुनभवेत्क्वचित्- तेषामेवहिसं
सृष्टंनिरयंब्रह्मणानृपेति ॥ ११ ॥ ईदृशीच भक्तिश्च
क्राद्यङ्कनाङ्गिका ॥ १२ ॥ तथोक्तंभारद्वाजसंहिता
यांपरिशिष्टेप्रथमाध्याये- विद्याविभूषणंपुंस-
स्तस्याद्वृत्तंविभूषणम् । विष्णुभक्तिर्विभूषास्यसा
चक्राद्यङ्कभूषणेति ॥ १३ ॥ स्वामिभृत्यभावस्थले

चावश्यकं दासत्वावगमकं स्वाम्यसाधारणचिह्नधारणं दासानाम् । अन्यथा दासभावस्यैवानभिव्यक्तत्वात्-दासभावाभिव्यञ्जनस्य स्वामिप्रीणनहेतूपासनाङ्गत्वेनावश्यकत्वाच्च ॥ १४ ॥ प्रसिद्धं च लोके राजभृत्यानां तत्तद्राजासाधारणचिह्नधारणम् ॥ १५ ॥ स्वतः सिद्धञ्च जीवानां भगवद्दास्यं = पतिं विश्वस्येति = प्रधानक्षेत्रज्ञपतिरिति च श्रुतेः-दासभूतास्स्वतस्सर्वे ह्यात्मानः परमात्मनः । नान्यथा लक्षणं तेषां बन्धे मोक्षे तथैव चेत्यादिस्मृतेश्च ॥ १६ ॥ अत एव चेतनानां स्वाभाविकभगवद्दास्योपपादनपूर्वकं तन्निरूपकतयैव भगवदसाधारणचक्रादिलाञ्छनधारणं समन्ततश्शास्त्राणि विदधति ॥ १७ ॥ यथोक्तं वृद्धहारीतस्मृतौ पञ्चमाध्याये-नैसर्गिकं तु जीवानां दास्यं विष्णोस्सनातनम् । तद्विना वर्तनं मोहादतिचारस्सनातनात् ॥ तस्मात्तु भगवद्दास्यमात्मनां श्रुतिचोदितम् । दास्यं विना कृतं यत्तु तदेव कलुषं भवेत् । विशिष्टं परमं धर्मं दास्यं भगवतो हरेरिति = सुदर्शनोर्ध्वपुण्ड्रादिधारणं दास्यमुच्यत इति = नि

रूपणत्वाद्दास्यस्य धार्यं चक्रम्महात्मनः। अङ्गत्वात्सर्वधर्माणां वैष्णवत्वाच्च धर्मत इति च ॥ १८ ॥ भरद्वाजसंहितायां न्यासोपदेशे तृतीयाध्यायेप्युक्तम्- दासभूतं यदात्मानं बुध्येत परमात्मनः। तदेव गात्रं कुर्वीत शङ्खचक्रादिलाञ्छितमिति ॥ १९ ॥ एवम्- अदसीय एवायम्- नान्यदीय इति देवतान्तरभक्तत्वव्यवच्छेदपूर्वकभगवदेकभक्तत्वसिद्धिलक्षणैकान्त्यादिप्रयोजकतयापि भगवदसाधारणचिह्नधारणमावश्यकम् ॥ २० ॥ उक्तं च तत्रतस्मिन्नेवाध्याये- ब्राह्मणः क्षत्रियो वैश्यश्शूद्रो नारी तथेतरः। चक्राद्यैरङ्कयेद्गात्रमात्मीयस्याखिलस्य च ॥ अनिष्टानां निवृत्त्यर्थमैकान्त्याय जगत्पतेः। सिद्ध्यर्थं कर्मणां चैव धार्यं चक्रादिलाञ्छनमिति ॥ ॥ २१ ॥ एवं तत्रैव संहितायां परिशिष्टे द्वितीयाध्यायेप्युक्तम्- तापः पुण्ड्रस्तथा नाम मन्त्रो यागश्च पञ्चमः। अमी परमसंस्काराः पारमैकान्त्यहेतव इति ॥ ॥ २२ ॥ यथोक्तलक्षणपारमैकान्त्यसिद्धिमन्तरेण न मोक्षस्सिध्यतीति च भगवतैव स्पष्टमुद्घुष्यते गीता

स्क-दैवीह्येषा गुणमयी मम माया दुरत्यया। मामेव ये प्रपद्यन्ते मायामेतां तरन्ति त इति सप्तमाध्याये-अनन्यचेताः सततं यो मां स्मरति नित्यशः। तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिन इत्यष्टमाध्याये-महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः। भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययमिति-अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते। तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहमिति नवमाध्याये-भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन। ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतपेत्येकादशाध्याये-मय्येव मन आधत्स्व मयि बुद्धिं निवेशय। निवसिष्यसि मय्येव अत ऊर्ध्वं न संशय इति द्वादशाध्याये-मां च योऽव्यभिचारेण भक्तियोगेन सेवते। स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पत इति चतुर्दशाध्याये-ततः पदं तत्परिमार्गितव्यं यस्मिन् गता न निवर्तन्ति भूयः। तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणीति पञ्चदशाध्याये-तमेव शरणं गच्छ सर्वभावेन भारत। तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि

शाश्वतमिति- सर्वधर्मान्परित्यज्य मामेकं शरणं
ज। अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि माशुचः
चाष्टादशाध्यायेपिच ॥२३॥ उदाहृतवचनेषु
वकारेणानन्यशब्देनाव्यभिचारशब्देनैकशब्दे
भगवदितरभक्तत्वव्यवच्छेदपूर्वकभगवद्भक्तत्व
क्षणपारमैकान्त्यस्यैव प्रतिपादनेन तादृशपार
न्त्यभाजामेव सर्वपापविमोक्षपूर्वकं संसारपा
त वैष्णव परमपदप्राप्तिरिति सिद्धं भवति ॥२४
बहुना- राजभृत्यानां तत्तद्राजासाधारण चिह्न
रणमन्तरेण- अयममुकस्य राज्ञो भृत्यः नान्य
तीतरभृत्यत्वव्यवच्छेदपूर्वक तत्तद्राजासाध
णभृत्यत्वनिर्णयासिद्धिवत्- भगवद्भक्तानां भग
वदसाधारणचिह्नधारणमन्तरेणेतरभक्तत्वव्य
वच्छेदपूर्वकभगवदेकभक्तत्वलक्षणपारमैका
न्त्यासिद्धेः- तादृशपारमैकान्त्यमन्तरेण मोक्षा
सिद्धेरुदाहृतगीतावचनसिद्धत्वाच्चलोकाः प्रम
णान्तराणि मानयन्तु- मास्म वा मानयन्- भगवद्गी
ताशास्त्रं प्रमाणं मानयद्भिः- मोक्षकाङ्क्षिणां भगव

क्त-नानां भगवदसाधारणाच्चक्रादिलाञ्छनधारणम
येपरेण नगतिरित्यकामेनाप्यभ्युपगन्तव्यमिति नि
अत्सरेणचेतसानितरां विमृशंतुविबुधाः ॥२५॥ इ
लांच संसाराध्वनः पारभूतं मुक्तिस्थान भूतंपर
हापदं प्रति विष्णोरेव स्वामितयासर्वैर्वेदैरुद्घुष्य-
नन्यत्वात्तत्पदस्वामिनो विष्णोः प्रसादनमन्तरेण
त्तपदस्याधिगन्तुमशक्यत्वात्- मोक्षहेतुभगवत्प्र
नांदनस्यैकान्तिकात्यन्तिक भगवद्भक्त्येकलभ्य
त्वात्- तादृशभक्तेश्चचक्रादिलाञ्छनधारणा-
तव्यङ्गदास्यभर्गत्वाच्च पारमैकान्त्यहेतुचक्रादि
मलाञ्छनग्रहणादिलक्षण वैष्णवदीक्षाजुषामेव
मोक्षस्सिद्ध्यति नान्येषामितिसिद्धं भवति ॥ २६ ॥
स एषन्यायानुगृहीतशास्त्रसिद्धो निष्कृष्टोर्थः- हृ
हद्धारीतस्मृतावष्टमाध्यायान्तेदर्शितः- वैष्णवः
परमैकान्तीनेतरोवैष्णवस्स्मृतः। नावैष्णवो व्रजे
न्मुक्तिं बहुशास्त्रश्रुतोपिवेति ॥२७॥ इतिश्रीभगवद्ध
र्मदर्पणेसङ्क्षेपतोनिष्कृष्टार्थवर्णनंनामद्वितीयःपरि
च्छेदः ॥ ॥छ॥ ॥छ॥ ॥

# अथभगवद्धर्मदर्पणेतृतीयपरिच्छेदः

अथपठ्यमानश्रुतिभिस्तप्तचक्राङ्कनविधानंनिरू-
प्यते॥१॥ तत्रतावत्त्रिषुवेदेषुपठ्यमाना-
पवित्रंतेविततंब्रह्मणस्पतेप्रभुर्गात्राणिपर्येषिवि
श्वतः। अतप्ततनूर्नतदामोअश्नुतेश्रृतासइ
द्वहन्तस्तत्समाशत॥१॥
इतिश्रुतिर्व्याख्यायते॥२॥ अस्याःश्रुतेर्विवरणमि
त्थंबोद्धव्यम्-हेब्रह्मणस्पते-ब्रह्मणः-चतुर्मुख-
स्य-पते-नियामक-अतएव-प्रभुः-सर्वनियामक
स्त्वम्-विश्वतः-तसेस्सार्वविभक्तिकत्वात्-वि
श्वेषाम्-विश्वानिवा-गात्राणि-सजीवशरीराणि
सर्वाणिभूतानीतियावत्-पर्येषि-सर्वात्मनानि
यच्छन्नन्तर्यामितयाव्याप्नोषि=अन्तःप्रविष्टश्शा
स्ताजनानांसर्वात्मेतिश्रुत्या-ईश्वरस्सर्वभूतानां
हृद्देशेऽर्जुनतिष्ठति-भ्रामयन्सर्वभूतानियन्त्रारू
ढानिमाययेतिस्मृत्याचोक्तरीत्यासर्वभूतानिसर्वा
त्मनाऽन्तःप्रविश्यनियच्छन् स्वीयंसर्वप्रभुत्वंस्प

ष्टमेवप्रकाशयसीतियावत्- ते- इत्थंसर्वप्रभोस्तव-प
वित्रं- सुदर्शनम्- विततम्- आस्तिकेषुव्याप्तम्- अ
ग्निसन्तप्तस्वसंयोगजन्याङ्कनद्वाराव्याप्तमितियावत्-
अथव्याप्तिस्वरूपंतदन्वयव्यतिरेकयोर्लाभहानीन्ववि
वृणोति- तेन- अतप्ततनूः- सुदर्शनायत्ततापसंस्का
रपूतगात्रभिन्नः- पवित्रमग्निसन्तप्ततत्संयोगजन्या
ङ्कनद्वारेणाधारयन्नितियावत्- अतएव- आमः- अ
परिपक्वः- अविनष्टपापइतियावत्- तत्- परब्रह्म- देश
विशेषावच्छिन्नं परब्रह्मरूपिणंत्वाम्- नाश्नुते- नप्रा
प्नोति- मोक्षंनप्राप्नोतीतियावत्- इत्- इदं- पवित्रम्-
इच्छब्द इदं शब्दार्थेछान्दसः- यद्वा- एवकारार्थोव
हन्तइत्यत्रान्वेति- पवित्रमितिद्वितीयान्तंप्रकरणा
दापतति- वहन्तः- पूर्वोक्तरीत्याऽग्निसंतप्ततत्संयोग
जन्याङ्कनद्वाराधारयन्तः- अतएव- शृतासः- शृताः
- आज्जसेरसुगित्यनुशासनेन- अवर्णान्तादङ्गात्प
रस्यजसोऽसुकस्यादित्यर्थकेनछान्दसोऽसुक्-
पक्वाः- श्रापाकइतिधातोः- शृतंपाकइतिसूत्रेनि
पातनसिद्धोयंशब्दः- तापसंस्कारवशेनविनष्ट

पापाइतियावत्-तत्-परंब्रह्म-समाशत- प्राप्नुयु
रिति॥ ३॥ इदमत्र तात्पर्यंनिष्पन्नंभवति- अस्मिन्
जगति प्रथमजस्यचतुर्मुखस्यापि प्रभुत्वेनसर्वप्र
भुभूतस्त्वम्- सर्वभूतान्यन्तः प्रविश्यसर्वात्मना
नियच्छन्स्वप्रभुत्वंसम्यक् प्रकाशयस्यपि- इत्थं
सर्वप्रभोस्तवचिह्नभूतंसुदर्शनम्- दासानांस्वामि
चिह्न धारणावश्यकत्वेनतद्दासभूतानामास्तिका
नांगात्रेषु- वह्निसन्तप्तस्वसंयोगजन्याङ्कनद्वारा
व्यासंभवति- इत्थंतप्तचक्राङ्कनसंस्कार पूतगात्र
भिन्नोत्थविनष्टपापःपुरुषः परमपुरुषप्राप्तिलक्षणं
मोक्षंनप्राप्नोति- तादृशसंस्कार शालिनस्तुनष्टपा
पास्सन्तोयथोक्तलक्षणंमोक्षंप्राप्नुयुरिति॥ ४ ॥
तथाच- पूर्वोक्तरीत्यास्वामि भृत्यन्यायेनैवतप्तच-
क्राङ्कनंधार्यमिति- तदभावेपारमैकान्त्यासिद्ध्या
मोक्षासिद्धिरितिच पूर्वोपदर्शितमेवार्थमियंश्रुतिर
पिप्रतिपादयतीतिसिद्धंभवति॥ ५ ॥ इत्थंच- अन्वय
व्यतिरेकाभ्यांतप्तचक्राङ्कनस्य मोक्षतदभावप्रयोज
कत्वंप्रतिपादयन्त्याऽनयाश्रुत्यामुमुक्षुणातप्तचक्रा

ङ्कनमवश्यंधार्यमितिविधिःफलितोभवति॥६॥पवि
त्रशब्दोहिसुदर्शनेयोगरूढः॥७॥सुदर्शनेन्द्रदर्भेच
पवित्रंचणासूत्रक इतिवेदनिघण्टुवचनात्-सुदर्शनं
सहस्रारंपवित्रंचरणंपविरिति- सुदर्शनंहरेश्चक्रं
पवित्रंचरणंपविरिति- पञ्चायुधानांप्रस्तावे-सुद
र्शनमरंचक्रंपवित्रंचरणंहरेरितिच नैघण्टुकवचना
त्- पवित्रंचरणंनेमिः पविश्चक्रंसुदर्शनम्।सहस्रा
रंप्राकृतघ्नंलोकद्वारम्महौजसम् - नामानिविष्णुच
क्रस्यपर्यायेणनिबोधम इतिपाद्मोत्तरखण्डद्वितीयाध्यायवचनात्- पवित्रंचरणंचक्रंलोकद्वारंसुद-
र्शनम्।पर्यायवाचका ह्येतेचक्रस्यपरमात्मन इति
श्रीशास्त्रवचनाच्च - पवित्रमितिसुदर्शनस्यसञ्ज्ञा
विज्ञायते॥८॥पवित्रमित्यग्निः - अग्निर्वैसहस्रा
र इत्याद्युदाहरिष्यमाणश्रुतिरपिपवित्रशब्दस्यसु
दर्शनसम्बन्धिसञ्ज्ञारूपत्वंप्रतिपादयति॥९॥
एकायनशाखाब्राह्मणेचप्रश्नपूर्वकंपवित्रशब्दोनि
रुक्तः- पवित्रमितिपुनःकस्यवार्ता-पुनातिचत्रायते
चेत्यतःपवित्रमिति॥१०॥भगवतापाणिनिनापि-कर्त

रिच्वर्षिदेवतयोरितिसूत्रेण- अर्तिलूधूसूखनसहचर इत्र इतिसूत्रत इत्र इत्यनुवृत्त्या- पुवस्सञ्ज्ञायामितिसूत्रतस्सञ्ज्ञायामित्यनुवृत्त्याच- पुवइत्र- स्स्यात्करणेकर्तरिच ऋषिदेवतयोस्सञ्ज्ञायामित्यर्थकेन परिशुद्धिकर्तृदेवताविशेषेयोगरूढतया पवित्रशब्दोनिष्पादितः ॥ ११ ॥ तथाच- पवित्रशब्दस्यवेदनिघण्ट्वादिभिः- सुदर्शनत्वावच्छिन्नेरूढिशक्तिः- एकायनब्राह्मणनिर्वचनेनपरिशुद्धित्राणकर्तृत्वावच्छिन्नेयोगशक्तिः- पाणिनीयनिर्वचनेनचपरिशुद्धिकर्तृत्वावच्छिन्नेदेवताविशेषेयोगरूढिरितिसिद्ध्यापवित्रशब्दस्सुदर्शनेयोगरूढइति सिद्धंभवति ॥ १२ ॥ अत्रत्यपवित्रशब्दश्चनदर्भपवित्रादिपरोभवितुमर्हति- तेनेति प्रकरणवशादध्याहृतपदेनपवित्रशब्दार्थपरामर्शिना- अतप्ततनूरित्यत्राकाङ्क्षिततापकरणस्योपस्थानावश्यकत्वात्- दर्भपवित्रादेस्तनुतापकरणत्वायोगाच्च ॥ १३ ॥ श्रुत्यन्तरसंवादानुरोधेनचपवित्रशब्दार्थस्यैवकरणतयान्वयोत्रावश्यकः ॥ १४ ॥ यजुषिकाठके-

चरणांपवित्रंविततंपुराणं- येनपूतस्तरतिदु
ष्कृतानि- तेनपवित्रेणशुद्धेनपूताः - इतिश्रुतौ-
पवमानसूक्ते
यत्तेपवित्रमर्चिषि- अग्नेविततमन्तरा- ब्रह्म
तेनपुनीमह इतिश्रुतौ-
येनदेवाःपवित्रेण- आत्मानंपुनतेसदा- तेन
सहस्रधारेण- पावमान्यःपुनन्तुमा- प्राजाप
त्यंपवित्रं- शतोद्यामं हिरण्मयं- तेनब्रह्म
विदोवयं-पूतंब्रह्मपुनीमह इति
श्रुतौच पूतादिशब्दोपस्थापितपापनिबर्हणसंस्का
रविशेषकरणतयैवहि पवित्रशब्दार्थान्वयो दृश्यते
॥१५॥ अतप्ततनूरित्यत्रापि पापनिबर्हणसंस्कार
विशेषएवहि तपधातुनोपस्थाप्यते ॥१६॥ पवित्रश्रु
त्यैककण्ठ्यात्- हे अग्ने- ते- अर्चिषि- अन्तरावित
तं यत्पवित्रं- तेनब्रह्मपुनीमह इत्यत्र तापरूपताया
व्यक्तत्वाच्चोदाहृतश्रुतिषु पूतादिशब्दोपस्थापि
तसंस्कारविशेषस्तापात्मकः ॥१७॥ एवंतदेकक-
ण्ठ्यादेवच- ब्रह्मतेनपुनीमहइत्यत्र- पूतंब्रह्मपु

नीमहइत्यत्रचब्रह्मपदं-अतस्ततनूरित्यत्र तनूशब्दोपस्थापित शरीरपरम्-तस्मादेतद्ब्रह्मनामरूपमन्नंचजायत इतिश्रुत्याम्-गीतायांचचतुर्दशाध्याये-ममयोनिर्महद्ब्रह्मतस्मिन्गर्भंदधाम्यहमिति-तृतीयाध्याये-कर्मब्रह्मोद्भवंविद्धिब्रह्माक्षरसमुद्भवमितिच प्रकृतिप्राकृतेषुब्रह्मशब्दप्रयोगदर्शनाच्च॥१८॥ एवं-तेनसहस्रधारेणेत्यत्रपवित्रस्य सहस्रधारशब्देनविशेषणात्-सहस्रधारत्वस्य सुदर्शन एव प्रसिद्धत्वाच्चोदाहृतश्रुतिघटकपवित्रपदस्यसुदर्शनपरताया:आवश्यकत्वात्तदैककण्ठ्यात् पवित्रश्रुतिघटकपवित्रशब्दोपिसुदर्शनपरएव॥१९॥ सतेनशैलेन भृशंरराज शैलोपमोगन्धवहात्मजस्तु।सहस्रधारेणसपावकेनचक्रेणखेविष्णुरिवापितेनेति श्रीरामायणेयुद्धकाण्डेचतुस्सप्ततितमसर्गेप्रयोगादपिसहस्रधारत्वविशेषणं सुदर्शनेप्रसिद्धमवगम्यते॥२०॥ प्राजापत्यंपवित्रमित्यत्र-प्रजापतिश्चरतिगर्भे अन्तरित्यादाविव प्रजापतिशब्दस्यभगवत्परतयाभगवत्सम्बन्धित्व

मेवपवित्रस्यप्रतिपाद्यतइति नपवित्रशब्दस्यस्कन्दर्शनपरत्वक्षतिः ॥२१॥ एवमत्र तच्छब्दद्वयस्यब्रह्मपरत्वं- तदितिवाएतस्यमहतोभूतस्यनामभवतीतिश्रुत्या- तच्छब्दस्यब्रह्मनामत्वावधारणात्सिद्धम् ॥२२॥ एवं- समाशतेतिपदं- अशूव्याप्तावित्यस्माद्धातोर्लिङिव्यत्ययेनशपितस्य बहुलंछन्दसीतिलुकिचकृतेबहुवचनेनिष्पन्नम्- छन्दसि लुङ्लङ्लिटइत्यनुशासनेन- प्राप्नुयुरितिलिङर्थमाचष्टइतिबोध्यम् ॥२३॥ एवं-

पवित्रमित्यग्निः- अग्निर्वै सहस्रारः-स
हस्रारोनेमिः- नेमिनाततनुः- ब्रह्मण
स्सायुज्यंसलोकतामाप्नोतिइति सामवेदमै-

त्रायणीयशाखागतंश्रुत्यापवित्रश्रुतेर्विवरणादपि पवित्रश्रुतिस्तप्तचक्राङ्कनपरा ॥२४॥ एवं- आमात्वात तप्ततनवस्तप्ताङ्काहरिलाञ्छनैः। भृतास्सुभोग्यतांप्राप्य भुज्यन्तेपरमात्मनेति भारद्वाजसंहितापरिशिष्टप्रथमाध्यायवचनेनापि शब्दतोर्थतश्चप्रत्यभिज्ञापनपूर्वकं यथोक्तार्थपरतयोपबृंहणादपी

यंपवित्रश्रुतिर्यथोक्तार्थपरा ॥२५॥ एवम्- विष्णो
र्नुकेनमन्त्रेण तापयित्वासुदर्शनम् - चरणंपवित्र
मितिद्वाभ्यांतदभिमन्त्रयेत् । पवित्रंतेविततमिति
मुद्रयेद्दक्षिणेभुजइतिसनकस्मृतौ सौदर्शनेकर्मणि
विनियोगादप्यस्याश्श्रुतेर्यथोक्तार्थपरत्वंसिद्धम् ॥
॥२६॥ एवं पाद्मपुराणोत्तरखण्डे द्वितीयाध्याये-
चरणंपवित्रंविततंपुराणंवाङ्मयंशुभम् । तेनचक्रे
णसंतप्तास्तरेयुःपातकाम्बुधिम् । पवित्रंब्राह्मण-
स्पत्यंजगन्मासंहरेत्सदा । तेनातप्ततनूर्येषांनतेया
न्तिपरंपदम्- तेनतप्ततनूर्येषांतेप्रयान्तिपरंपदमि
ति= शुक्लेनवह्नितप्तेनब्रह्मतेनपुनीहिनः । यत्तेप
वित्रमर्चिष्मदग्नेतेनपुनीहिनः । येनदेवाःपवित्रेणआ
त्मानंपुनतेसदा । तेनसहस्रधारेणपावमान्यःपुन
न्तुमा । प्राजापत्यंपवित्रंतुशतोद्यामंहिरण्मयं । तेनब्र
ह्मविदोवयंपूतंब्रह्मपुनीमहे । सनेमिश्चक्रमजरं-
चक्रस्यमहात्मनः । अस्मिन्हिविधृतेदेवामहोन्न
तपदंययुः । इत्येवंश्रुतयस्सर्वाःकथयन्तिवराननइति
चवचनैः पवित्रश्रुतिचरणश्रुत्योः श्रुत्यन्तराणांच्च

कधारणपरत्वेनोपबृंहणंस्पष्टमुपलभ्यते ॥२७॥ बृह
द्धारीतस्मृतौ द्वितीयाध्याये- पवित्रंविततंब्रह्मप्रभो
र्गात्रेतुधारितम् । श्रुत्यैवचाङ्क्येद्गात्रे तद्ब्रह्मसमवा
मये। यत्तेपवित्रमर्चिष्यमग्नेविततमन्तरा । ब्रह्मतेन
पुनीमहे ब्राह्मणाश्रुतिबृंहितमिति = यत्तेपवित्र
मर्चिष्यमग्ने तेनपुनीहिनइतिचोक्त्वा अन्ते- इत्यादि
श्रुतिभिः प्रोक्तंविष्णोश्चक्रस्य धारणमिति कथनाद
पि पवित्रादिश्रुतिस्तप्तचक्राङ्कनपराव्याख्याताभ
वति ॥२८॥ अस्याश्चपवित्रश्रुतेरुपबृंहणान्तराण्यु
पबृंहणासिद्धानि बहूनि योजनान्तराण्यपिच तत्रत
त्रद्रष्टव्यानि ॥२९॥ इत्थंच- बहूपबृंहणोपबृंहि
तापवित्रश्रुतिस्तप्तचक्राङ्कनपरेतिसिद्धम् ॥३०॥
इदमत्रावधेयम्- इत्थं बहूपबृंहणोस्फुदर्शनधा
रणपराया अस्याः पवित्रश्रुतेः क्वचिदन्यकर्मणि-
विनियोगदर्शनेपि मुख्यगौणविनियोगानां बहूना
मेकस्यसद्भावस्थले मुख्यार्थाप्रहाणेनैवकथञ्चि
त्तत्द्विनियोगनिर्वाहवदिहापितथानिर्वाहसंभवा
न्मुख्यत्वसम्भवेप्रयोगभेदेनतत्परत्वस्यापिस

म्भवेचाबाधकाभावाच्चनचक्रधारणापरत्वविरो
धः - श्रुत्यन्तरेष्वपिचायंन्यायोनुसर्तव्यइति॥३१
॥ अथयजुषिकाठके पठ्यमानम् -

चरणंपवित्रंविततंपुराणं। येनपूतस्तरति
दुष्कृतानि। तेनपवित्रेणशुद्धेनपूताः। अ
तिपाप्मानमरातिंतरेम ॥२॥ लोकस्य
द्वारमर्चिमत्पवित्रं। ज्योतिष्मद्भ्राजमानंम
हस्वत्। अमृतस्यधाराबहुधादोहमानम्।
चरणंनोलोकेसुधितान्दधातु॥ ३ ॥

इतिमन्त्रद्वयंव्याख्यायते ॥ ३२ ॥ चरणमित्या
दिमंत्रद्वयस्यविवरणमित्थंबोध्यम् - पवित्रम् - प
रिशुद्धिकरम् - चरणम् - परगतिसाधनंचक्रम् - एत
न्मन्त्रव्याख्यानेधानुष्कयज्वनाम्नाग्निवेदीभाष्य
कारेण - चरणशब्दस्सुदर्शनाभिधायीतिव्याख्याना
त् - भट्टभास्करेणज्ञानयज्ञाख्येभाष्येचरणशब्दो
देवताविशेषपरइतिव्याख्यानाच्चसुदर्शनदेवतापरो
यंचरणशब्दः - पुराणम् - अनादियथातथा - विततम् -
आस्तिकजनेष्वग्निसंतप्तस्वसंयोगजन्यचिह्नरूपेण -

व्याप्तम्- आस्तिकजनेषुतप्तचक्रधारणमनादीतिया
वत्-येनचक्रेणपूतः- वह्निसन्तप्तस्वसंयोगजन्याङ्क
नेनसंस्कृतःपुरुषः-दुष्कृतानि-पापानि- तरति- अ
तिलङ्घयति- नाशयतीतियावत्- पवित्रेण-स्वसं
बन्धात्परेषांपरिशुद्धिकरेण-शुद्धेन-स्वयंनिरस्त
निखिलदोषलक्षणनिरतिशयशुद्धिशालिना- ते
नचक्रेणपूताः- वह्निसंतप्तस्वसंयोगजन्याङ्कनेनसं
स्कृताः-वयम्- अरातिम्- शत्रुम्- भगवत्प्राप्तिल
क्षणमोक्षप्रतिबन्धकमितियावत्-पाप्मानम्-पा
पम्-अतितरेम- अतिलङ्घयेम- विनाशयेमेतिया
वत्- व्यवहिताश्चेत्यनुशासनेनातीत्यस्यव्यवहित
प्रयोगश्छान्दसः-लोकस्य- भगवल्लोकस्य-द्वारम्-
प्राप्त्युपायभूतम्- अर्चिमत्- अर्चिष्मत्-ज्वालायु
क्तम्- पवित्रम्-परिशुद्धिकरम्- स्वगतज्वालयाः
ङ्कनंकृत्वाशुद्धिविशेषकारणीभूतमितिविशेषणा
द्व्यफलितार्थः- ज्योतिष्मत्-किरणवत्-महस्वत्-
प्रभालक्षणतेजोयुक्तम्- अतएव-भ्राजमानम्-दी
प्यमानम्-द्द्यंभासमानमितियावत्- अमृतस्य-

मोक्षस्यधाराः अवच्छिन्नानुभवप्रकारान्- बहुधा -अनेकधा-दोहमानम्- दुहानम्-सम्पादयंत्- चरणम्- चक्रम्- नः- अस्मान्- लोके-परमपदे-स्वधितान्-स्वखितान्-स्वप्रतिष्ठितान्वा-दधातु-स्थापयतु- पोषयतुवा-इति॥ ३३॥ इदमत्र तात्पर्यं निष्पद्यते- तप्तचक्रधारणलक्षणस्संस्कारविशेष आस्तिकैरनादिकालतोऽनुष्ठीयते-तत्फलंच सर्वपापनिवृत्तिः- अतस्तादृशसंस्कारविशेषसंस्कृतावयमपिसर्वपापानिनिवर्तयेम- परमपदप्राप्त्युपायभूतं तापसंस्कारतोनिरतिशय शुद्धिहेतुभूतंज्वालाकिरणतेजोभिरतिशयेन शोभमानं सुदर्शनमस्मान् परमपदेनिरतिशयस्वस्वस्थापयत्विति॥३४॥ अत्रपापनिवृत्तिकामस्तप्तचक्रधारणलक्षणसंस्कारविशेषंकुर्यादिति-परमपदप्राप्तिलक्षणमोक्षकामस्तादृशसंस्कारविशेषंकुर्यादितिचविधिः फलितोद्रष्टव्यः॥३५॥ अत्रचरणशब्दः- चरणंप्राङ्गुणेचक्रइतिनैघण्टुकवचनात्- प्रागष्टमवाक्योदाहृतनैघण्टुकव

चनपाद्मपुराणवचनश्रीशास्त्रवचनेभ्यश्चस्कन्दर्श नेरूढः- चरतेर्गत्यर्थकत्वात्प्रत्ययस्य करणार्थक त्वाच्चपरगतिसाधनेचयौगिकइतिबोध्यम्॥३६॥ चरणपवित्रादिशब्दानांस्कन्दर्शनेरूढत्वेपि- चरणं नोलोकेस्कधितान्दधात्विति वाक्यानुरोधाच्चरण शब्दस्यविशेष्यपरत्वमन्येषांनिर्वचनविवक्षयाविशेष णपरत्वंचाश्रितम्॥३७॥स्कधितवस्कधितनेमधितधि ष्वधिषीयचेति- निपातनात्- स्कधितानित्यत्रछन्दसि दधातेर्नहिः॥३८॥ अत्रपूतपदस्यवह्निसंतप्तस्कन्दर्श नसंयोगजन्यतापसंस्कारपरत्वंचश्रुत्यन्तरानुगुण्ये न- प्रागुदाहृतेन- चरणंपवित्रंविततंपुराणंवाङ्मयं शुभम्- तेनचक्रेणसंतप्तास्तरेयुः पातकाम्बुधिमि ति पाद्मवचनेनचेतिबोध्यम् ॥३९॥वृद्धहारीतस्मृ तावष्टमाध्यायेश्रौतेभगवद्धर्मदीक्षाविधौ- आज्यं हुत्वाततश्चक्रंतदग्नौप्रतपेद्गुरुः। चरणंपवित्रमि ति तच्चक्रेणाङ्कयेद्द्विजमितितप्तचक्राङ्कनेस्यमन्त्र स्यविनियोगादपिचात्रत्यपूतशब्दस्यतप्तचक्रा ङ्कनलक्षणसंस्कारपरत्वमवसेयम्॥४०॥एवम-

स्य मंत्रद्वयस्य स्फुटदर्शनपरत्वं पूर्वोदाहृतैरूपबृंहणैर्ज्वालाकिरणतेजःप्रभृतिभिर्लिङ्गैश्चस्पष्टतरं प्रतिपन्नंद्रष्टव्यम् ॥४१॥ अतोस्यापिक्वचिदन्यत्र विनियोगेपिपूर्वोक्तन्यायेनैव निर्वाहो बोद्धव्यः॥४२ ॥ इतिचरणादिमन्त्रद्वयव्याख्यानम्॥४३॥अथऋचिसाम्निचपठ्यमाना-

चमूषच्छ्येनश्शकुनोविभृत्वागोविन्दुर्द्रप्सआयुधानिबिभ्रत्- अपामूर्मिंसचमानस्समुद्रं तुरीयंधाममहिषोविवक्ति॥४॥ ॥इतिश्रुतिर्व्याख्यायते॥४४॥अस्याश्श्रुतेर्विवरणमित्थंबोद्धव्यम्-अपाम्-पुनःपुनश्शरीरारम्भायानुवर्तमानानांभूतसूक्ष्माणाम्- पञ्चाग्निविद्यायाम्- पञ्चम्यामाहुतावापः पुरुषवचसोभवन्तीत्यादौशरीरारम्भायानुवर्तमानानांभूतसूक्ष्माणांजलभागबाहुल्येनहेतुनाजलवाचकेनाप्छब्देनहिनिर्देशः कृतः -ऊर्मिंतरङ्ग- तरङ्गोहिजलकार्यभूतः- ततइहभूतसूक्ष्मकार्यभूतमित्यर्थःफलति-समुद्रं- दुस्तरं शरीरम्-संसारसागरमितियावत्- सचमानः-सेवमानः-षचसेव

नेसेवने चेति हि धातुः- षच समवाय इति वा धातुः - सचमानः - संगच्छन् - सर्वथा - संसारखेदायत्ततन्निवृत्तीच्छावानिति यावत् - गोविन्दुः = गोविन्दस्य - तृज्वद्भावोत्र छान्दसः - द्रप्सः - अंशभूतो जीवः - स्वतो भगवच्छेषभूतो जीव इति यावत् - ममैवांशो जीवलोके जीवभूतस्सनातन इत्यादिषु शास्त्रेषु भगवदंशत्वेनहि जीवा निर्दिश्यन्ते अंशत्वंच - शरीरशरीरिभावापन्ने विशिष्टे वस्तुनि शरीरात्मक विशेषण भागरूपत्वात् - तच्छेषत्व एव पर्यवस्यति - आधेयत्व विधेयत्व शेषत्वानामेव शरीरलक्षणत्वात् - अत्र शेषत्वोत्कीर्तनं स्वामिभृत्यभावन्यायेन वक्ष्यमाण भगवदायुध धारणस्यावश्यकत्वद्योतनाय - गोविन्दुः - आयुधानि - बिभ्रत् - गोविंदुरित्यस्य द्रप्स इत्यत्र - आयुधानीत्यत्रचान्वयो ग्राह्यः - कस्य द्रप्स इति - कस्यायुधानीति चाकाङ्क्षायाउभयत्रोत्थानाच्छामक पदान्तराभावात्सन्निहितत्वाच्च - पूर्वोदाहृत श्रुत्यन्तरादैककण्ठ्येन स्कन्दर्शनादि भगवदायुधानि वह्नि संतप्त तत्संयोगजन्याङ्कनद्वारा धारयन्सन्नित्यर्थः - शकुनः - संसारादात्मानमुन्नेतुं शक्तः - श

क्तोत्यात्मानमुन्नेतुमिति शकुनइतिहि निरुक्तम्-वि भृत्वा- अन्येभ्योपिदृश्यन्तइत्यनुशासनेन- मनिन्-क्वनिप्-वनिप्-विच्-एतेप्रत्ययाधातोस्स्युरित्यर्थे केन क्वनिबन्तमिदम्- अन्येषामपिभरणसमर्थः-स्वाश्रितानामपिसंसारादुद्धरणसमर्थः- तथाच-संसारात्स्वात्मानंस्वयमुन्नेतुंशक्तस्स्वसम्बन्धादन्यांश्चोद्धर्तुंसमर्थश्चसन्निति विशेषणद्वयफलितार्थः-चमूषत्- चम्वांनित्यसूरिपरिषदिसीदतीतिचमूषत्-नित्यसूरिभिरनुगम्यमानः- श्येनः- प्रशस्ततमंपरमपदंगच्छन्- शंसनीयंगच्छतीति श्येनइति हिनिरुक्तम्-अर्चिरादिगत्यापरमपदगमनदशायांनित्यसूरिभिरभिमुखमागतैरनुगम्यमानोगच्छन्निति विशेषणद्वयफलितार्थः-महिषः- महिष्ठः-उदाहरिष्यमाणस्मृत्यनुरोधात्- अतिशयेन महान्- अथवामह्यतइतिमहिषः- मह्पूजायामितिचधातुः-अविमह्योष्टिषजित्यौणादिकप्रथमपादसूत्रात् टिषच्-इत्यंपूजितस्सन्नितिवा- तुरीयंधाम- वासुदेवाख्यं परंतेजः- यद्वा- कर्मवश्यानांप्राप्यस्थानत्रयात्तु-

र्थं परमपदम्- विवक्ति-स्तौति- वचपरिभाषणाइतिधा
तोर्विपूर्वाल्लट्- विशिष्टंचवचनंस्तुतिः- तद्विप्रासो-
विपन्यवः॥ सामगायन्नास्तइत्यादिश्रुत्युक्तरीत्या
स्तुतिंकुर्वन् प्राप्नोतीत्यर्थः- यद्वा-विवक्ति-सेवते-
प्राप्नोति- उपसर्गादिवशेन धातूनामनेकार्थत्वात् प्र
करणानुरोधाच्चायमिहार्थः- अतएव-विवक्ति सिष
क्ति जुषतइति माधवीयाख्याता नुक्रमणिकायांवि
वक्तिस्सेवार्थकउक्तः- यद्वा धातुषु दशगणपाठो
बहुलमित्यभ्युपगमेन द्वीकारेणश्रौतोधातुरयमन्यएवक
श्चित्सेवार्थकइति॥४५॥इदमत्रतात्पर्यंनिष्पन्नम्-
स्वतस्सिद्धभगवद्दासभावस्संसारिचेतनः- स्वदा
सभावानुगुण्येनचक्रादिभगवल्लाञ्छनधारणंकृ
त्वा संसारसागरंस्वयं तर्तुं स्वसम्बन्धादन्यांस्तारयि
तुंचसमर्थस्सन्- अन्तर्नोर्चिरादिगत्यागतोनित्य
सूरिभिरभिमुखमागतैरनुगम्यसत्कृतः परमपदंग
च्छतीति॥४६॥ तथाचानया श्रुत्यासंसारनिवृत्ति
पूर्वक परम पदप्राप्तिकामो गोविन्दस्या युधानिबि
भृयादितिविधिः फलितोद्रष्टव्यः॥४७॥अस्याश्श्रु

तेस्सुदर्शनधारणपरत्वंच- पारमेश्वरसंहितायां प्रतिष्ठाध्यायेचक्रप्रतिष्ठांप्रस्तुत्यविनियुज्यमानमन्त्रजालस्थले- चमूषच्छ्येनइतिच प्रतद्विष्णोरिति त्र्यचौ- पाठयेद्बह्वृचान् पश्चाच्छाकुनंसूक्तमेवञ्चेत्यस्या अपिविनियोगदर्शनात् = गोविन्दस्यायुधान्यङ्गे बिभ्रत्सश्रोणिवैद्विजः। तुरीयंधामतद्विष्णोर्महिष्ठः प्राप्नुयादिति। चमूषच्छ्येनश्शकुनोविभृत्वेतिऋगब्रवीदितिस्कान्दवचनाद्युपबृंहणबलाच्चासिद्धम्॥४८॥ अस्याश्श्रुतेर्योजनान्तराण्युपबृंहणान्तराणिचान्यत्रद्रष्टव्यानि॥४९॥ अस्याअपिविनियोगान्तरसत्त्वेपूर्वोक्तन्यायेनैवनिर्वाहोबोध्यः ॥५०॥ इतिचमूषच्छ्रुतिव्याख्यानम्॥५१॥एवं शुक्लयजुर्वेदेशतपथब्राह्मणोपक्रमानेयाज्ञवल्क्यकात्यायनसंवादरूपेदशानुवाकेचक्रब्राह्मणेप्रत्यनुवाकंपरमपुरुषसायुज्यसालोक्यादिपुरुषार्थहेतुतया तप्तचक्राङ्कनमूर्ध्वपुण्ड्रधारणंचविधीयते॥५२॥ तत्रहि- तप्तचक्रंद्विभुजेधार्यमित्यूर्ध्वपुण्ड्रमालिखेत्तस्माद्धरेरवंभवतीत्ये

वमादिकयानुपूर्व्यातप्तचक्राङ्कनोर्ध्वपुण्ड्रधारण विधानम्

ब्रह्मणस्सायुज्यं सलोकतांजयतियएवंवेदेत्ये वमादिकयानुपूर्व्याफलंञ्चश्रूयतेप्रायशःप्रत्यनुवा कम् ॥५३॥

तत्रषष्ठानुवाके—

देवासःपितरोयेनविधृतेनबाहुनासुदर्शनेनप्रयतास्स्व र्गंलोकमायन्। येनाङ्किताःमनवोलोकसृष्टिंवितन्वन्ति। ब्राह्मणास्तद्वहन्ति- अभिनावैह्नोत्रात्संचक्रद्विभुजे धार्यमित्यूर्ध्वपुण्ड्रमालिखेत्। तस्माद्धिरेरवंभवति-पु नरागमनंनयाति। ब्रह्मणस्सायुज्यं सलोकतांजय ति-यएवंवेद॥५॥

इतिश्रवणेनदेवानांपितृणांञ्चसुदर्शनधारणलक्षणसं स्कारमहिम्नास्वर्गलोकप्राप्तिम्-मनूनामपितन्म हिम्नालोकसृष्टिशक्तिलाभंतादृशसंस्कारस्यब्र ह्मविद्धार्यमाणत्वंञ्चार्थवादमर्यादयाप्रदर्श्यःतप्त चक्राङ्कनसच्छिद्रोर्ध्वपुण्ड्रधारणेविधायपरब्रह्म सायुज्यसालोक्यप्राप्तिलक्षणंतत्फलंञ्चस्पष्ट

मभिहितम् ॥ ५४ ॥ देवासइत्यादेश्श्रुतेश्चेत्थंविव
रणंबोध्यम्- देवासः -देवाः - पितरश्च - बाहुना-
दक्षिणेनवामेनच-विधृतेन- अग्निसंयोगजन्या
ङ्कनविधयाधृतेन-येनस्कदर्शनेन-प्रयताः-पूता
स्सन्तः-स्वर्गलोकं - आयन्- प्राप्ताः - मनवः- ये
नाङ्कितास्सन्तः - लोकसृष्टिंवितन्वन्ति- लोकसृ
ष्टिसामर्थ्यंलभन्ते- तस्कदर्शनम्- ब्राह्मणाः -
ब्रह्मविदोऽवश्यानुष्ठेयवैदिककर्माणिस्त्रैवर्णिके
ष्वग्रगण्याविप्राः - वहन्ति- अग्निसंयोगजन्याङ्क
नद्वाराधारयन्ति - इति- अतोहेतोः - होत्रा- क
ल्पोक्तरीत्या- होमंकुर्वता पुरुषेण- अग्निना- होम
संस्कृतेनाग्निना- तसंचक्रं- द्विभुजे- भुजद्वये- धार्यम्-
अङ्कनविधयाधारयितव्यम्- विध्युक्तरीत्याहवन
पूर्वकमेवतापसंस्कारः कर्तव्यइतियावत्- ऊर्ध्वपु
ण्ड्रम्- आलिखेत्- नासिकामूलमारभ्योर्ध्वमी
षल्लिखेत् - किञ्चिद्दूरं लिखेत्- आङीषदर्थेभि
व्याप्तौसीमार्थेधातुयोगजइति कोशादीषदर्थ
कोयमाङ्- तस्मात् -ईषल्लिखिताद्दूर्ध्वपुण्ड्रात्-

ह्रिरेखम् - रेखाद्वयं भवति - ततऊर्ध्वंललाटेरेखा द्वयंकर्तव्यम् - समूलंसच्छिद्रमूर्ध्वपुण्ड्रंकर्तव्यमि तियावत् - आरभ्यनासिकामूलंललाटान्तंलिखे न्मृदम् - समारभ्यभ्रुवोर्मध्यमन्तरालंप्रकल्पये दितिपाद्मोत्तरखण्डतृतीयाध्यायवचनाद्युपबृंह णासिद्धोयमर्थः - ऊर्ध्वपुण्ड्ररेखाद्वयमध्येहरि द्राचूर्णादिनारेखान्तरकरणंश्रुत्यन्तरोपबृंहणा द्यनुरोधेनसिध्यतीतिबोध्यम् - एवंचक्रधारण मिहभगवदायुधान्तरधारणोपलक्षणंप्रमाणा न्तरानुरोधेनबोद्धव्यम् - एवंभुजद्वयेपिचक्रस्ये कस्यैवधारणमपितत्तदुपबृंहणासिद्धंवेदितव्य म् - एवंतसचक्राङ्कोनोर्ध्वपुण्ड्रधारीपुरुषः - ब्र ह्मणः - परब्रह्मणोनारायणस्य - सायुज्यंसलो कतांच - जयति - साधयति - पुनरागमनंनयाति यएवंवेद - सोपिजयतिनयातीत्यन्वयः - योश्वमे धेनयजते - यउचैनमेवंवेदेत्यादिषुतत्तत्कर्मानु ष्ठानज्ञानयोरेकफलप्रतिपादनस्यश्रुतिशैलीसि द्धत्वात् - अत्रवेदनमात्रस्यानुष्ठानफलवर्णनंक्र

मेणानुष्ठानद्वारातत्फलसिद्ध्यभिप्रायकमेव-गुरुलघुयत्नयोस्तुल्यफलत्वासंभवात्- अन्यथागुरोर्नैरर्थक्यप्रसंगाच्चन्यद्वा- भवतीत्यनन्तरमू-यएवंवेदेत्यारभ्यैवयोजनाकार्या- यः -एवम्- वेद-पूर्वोक्तेचक्राङ्कनोर्ध्वपुण्ड्रधारणेज्ञात्वाऽनुतिष्ठति-सः-ब्रह्मणस्सायुज्यंसलोकतांचजयति -पुनरागमनंनयातीति॥५५॥ इतिशतपथश्रुतिव्याख्यानम्॥५६॥ एवमन्यान्यपिपठ्यमानश्रुतिवाक्यानिचक्राङ्कनपराणितत्रतत्रद्रष्टव्यानि ॥५७॥ ॥इतिश्रीभगवद्धर्मदर्पणेतप्तचक्राङ्कनपरपठ्यमानश्रुत्यर्थविचारोनामतृतीयःपरिच्छेदः॥ ॥७॥ ॥७॥ ॥७॥

॥श्रीः॥

श्रीमतेरामानुजायनमः श्रीमदनन्तार्यमहागुरवेनमः अथखिलश्रुतिभिस्तप्तचक्राङ्कनविधानंनिरूप्यते॥ ॥१॥ ॥तत्रप्रथमम्-

निर्विक्षेपस्त्रूषणांभिद्यमानस्यमध्येबाहुमदधत्सुदर्शनम्- विष्णोरिदंभूरिदंभूरितेजः प्रधर्षति

दिवानक्तं बिभृयुस्तज्जनासः ॥१॥

इत्येषायाजुषबृहदारण्यकशाखाभेदस्थान्माथर्वणिकसुदर्शनोपनिषदन्तःस्थाच्चश्रुतिर्व्याख्यायते॥२॥ अस्याश्श्रुतेरित्थंविवरणंबोध्यम्-मध्येबाहुम्-बाह्वोर्मध्ये-दक्षिणेवामेच बाह्वोर्मध्यभागइत्यर्थः- मध्यश्चात्रवैपुल्यपरिमाणापेक्षयाग्राह्यः-नदीर्घपरिमाणापेक्षया- अन्यथाबाहुमूलरूपस्थानविधायकशास्त्रान्तरविरोधापत्तेः- ततश्चेहमध्यशब्देनबाह्वोः पार्श्वव्यावृत्तिः कृताभवति - नतूर्ध्वाधोभागव्यावृत्तिः- बाहुमूलविधायकशास्त्रान्तरैककण्ठ्याच्चबाहुमूलमध्यइत्यर्थः फलितोभवति।-पारेमध्येषष्ठ्यावेत्यनुशासनेनात्रसमासः- बाहुमितिमकारश्छान्दसः- इहसुदर्शनधारणस्येदृशबाहुमध्यभागस्थानविधानञ्चसुदर्शनादिलाञ्छनस्योर्ध्वपुण्ड्रमध्यस्थितिलाभाय- तदीयतद्बहिर्भागस्थितेःप्रत्यवायहेतुत्वात्- अतएवोक्तं भरद्वाजसंहितायां परिशिष्टेप्रथमाध्याये=ऊर्ध्वपुण्ड्रान्तरालस्थांश्चक्रादीन्धारयेत्सदा-बहि

ष्कृतात्यभिक्रुद्धाःपदात्प्रच्यावयन्तितइति-सुद
र्शनम्-चक्रम्-अदधत्-अङ्कनरूपेणाबिभ्राणः
पुरुषः-भिद्यमानम्-नानाप्रकारम्-स्फुषणम्-स्फु
र्वात्-षोऽन्तकर्मणीतिदेवादिकाद्धातोर्ल्युटि-
युवोरनाकावित्यनादेशे-आदेचउपदेशेऽशितीत्य
नुशासनेन-उपदेशएजन्तस्यधातोरात्स्यान्नतुशि
तीत्यर्थकेनप्राप्तस्याऽऽकारस्यछान्दसेलोपे-उपस
र्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसे
धसिचसञ्जस्वञ्जामित्यनुशासनेन-उपसर्गस्था
न्निमित्तादेषांसस्यषस्स्यादित्यर्थकेन-सस्यषत्वे
नस्यणत्वेचनिष्पन्नमिदंरूपम्-अन्तकरम्-बाह्या
भ्यन्तरबाधकजातम्-शत्रुजातंपापजातंचेतिया
वत्-निचिक्षेप-स्वात्मनिस्थापितवानेव-नतुपरिहृ
तवान्।-स्वीयत्रैकालिकनानाविधबाह्याभ्यन्तर
बाधकगणपरिहारोद्योगलेशमप्यकृतवानेवभव
तीतियावत्-अनेनाकरणेप्रत्यवायप्रदर्शनमुखे
नचक्रधारणस्यावश्यकत्वमुक्तंभवति-तद्धारणे
कथंतत्परिहारोभवतीत्यत्राह-विष्णोरिदमित्या

दि-भूरितेजः-प्रभूततेजोयुक्तम्-भूरिदम्-बहुफल प्रदम्-विष्णोः-इदंसुदर्शनम्-रूषणामित्यनुषज्यते प्रकरणासामर्थ्यात्-सुषणाम्-बाह्याभ्यंतरबाधक जातम्-प्रधर्षति-अभिभवति-हिनस्तीतियावत्-धृ षप्रसहनइति धातुरयंचौरादिकआधृषीयः-आधृषी याविभाषितणिचः-ततोत्रविकल्पतोणिजभावः। प्र सहनमभिभवः। तत्-ततोहेतोः-रूदर्शनमितिप्रक- रणासामर्थ्यादनुषज्यते-सुदर्शनम्-चक्रम्-जनासः -जनाः-आज्जसेरसुगित्यनुशासनेनछान्दसोऽसु क्-दिवानक्तम्-सर्वदा-बिभृयुः-अङ्कनरूपेणसर्व दाधारयेयुरितियावत्-तथाच-चक्रधारणमन्वयव्य तिरेकाभ्यांबाह्याभ्यंतरसकलविरोधिनाशतदभाव- प्रयोजकम्-अतस्तन्निवृत्तिकामाअवश्यमङ्कनरू पेणतद्धारणंकुर्युरितिविधिःफलितोभवति-एतांश्रु तिमनुसृत्यैवच-भरद्वाजसंहितायांन्यासोपदेशतृती याध्याये-अनिष्टानांनिवृत्त्यर्थमेकान्त्यायजगत्प तेः-सिद्ध्यर्थंकर्मणांचैवधार्यंचक्रादिलाञ्छनमि त्यत्र-आङ्कितःक्वचिदप्यङ्गेचक्रेणैकेनकेवलम्॥ अ

निष्ठानान्तुभूतानांनतावद्दशगोभवेदित्यत्रचचक्रधार
णस्यानिष्ठनिवर्तकत्वमभिहितमस्ति॥३॥ अस्या
श्श्रुतेर्योजनान्तराण्यन्यतोवसेयानि॥४॥अस्या
श्श्रुतेर्वक्ष्यमाणानाञ्चश्रुतीनामुपबृंहणवचनानि
सकृदेवोत्तरत्रोदाहरिष्यामः॥५॥इतिनिक्षेपस्या
दिश्रुतिव्याख्यानम्॥६॥ अथ-

पवित्रमित्यग्निः-अग्निर्वैसहस्रारः-सहस्रा
रोनेमिः-नेमिनातप्ततनुः-ब्रह्मणस्सायुज्यं
सलोकतामाप्नोति॥२॥

इतिसामवेदीयमैत्रायणीयशाखिश्रुतिर्व्याख्याय
ते॥७॥इयंश्रुतिः-पवित्रन्तेविततमित्यादिश्रुतिव्या
ख्यानभूता॥८॥अस्याश्चविवरणमित्थंबोध्यम्-प
वित्रमिति-पवित्रन्तइत्यादिश्रुतौपवित्रशब्दनिर्दिष्टं
वस्तु-अग्निः-अपृथक्सिद्धिलक्षणसम्बन्धविशेष
णाग्निविशिष्टरूपम्-अग्निरपिपवित्रशब्दप्रवृत्तिनि
मित्तघटकइतियावत्-अनेनाङ्कनप्रयोजकमग्निमय
स्वरूपंविशेषणंचक्रस्यफलितम्-पृथक्प्रतिपत्तिवा
रकसम्बन्धविशेषेणप्रकारप्रकारिभावापन्नयोर्व

स्तुनोरेकतरवाचकानामुक्तसम्बन्धविशेषेणास्ववाच्य विशिष्टवेषेणापरवाचकतायाअपिसिद्धतयातयोस्सा मानाधिकरण्येननिर्देशस्यलोकवेदयोस्सुप्रसिद्धत्वादु क्ताभिप्रायेणात्र- अग्निरितिसामानाधिकरण्यनिर्देशो युज्यते- प्रसिद्धोहिलोके- अयःपिण्डोग्निस्संवृत्तः-ल वणंजलंसंवृत्तमित्यादिनिर्देशः-वेदेपि-विज्ञानंदेवास्स र्वे-सत्यंज्ञानमनन्तंब्रह्म-सब्रह्मासशिवस्सेन्द्रस्सोक्ष रःपरमस्स्वराट्॥ इत्यादयोनिर्देशाः प्रसिद्धाः-अतो ग्निविशिष्टत्वेनसुदर्शनस्याग्निशब्देननिर्देशस्सङ्गच्छ ते-प्रसिद्धाग्निशङ्कापरिहारायाह-अग्निर्वाइत्यादि-प वित्रमितीत्यत्रत्यमितिपदमुत्तरत्रप्रत्युद्देश्यवाचकप दमनुषज्यते-प्रकरणैकरूप्यानुरोधात्- अग्निरितिवै- अनुपदमग्निशब्दनिर्दिष्टंवस्तु-सहस्रारः-सुदर्शन रूपम्-सुदर्शनत्वमपिपवित्रशब्दप्रवृत्तिनिमित्तघट कमितियावत्-सहस्रारइत्यत्रारशब्दस्यकथञ्चि दुपचारतोज्वालाबोधकत्वसम्भवेनपुनरपिप्रसिद्धा ग्निपरत्वभ्रमानुवर्तनादाह-सहस्रारइत्यादि-सह स्रारइति- अनुपदंसहस्रारशब्दनिर्दिष्टंवस्तु-नेमिः-

अपृथक्सिद्धिलक्षणसम्बन्धविशेषेणाग्निविशिष्ट
चक्ररूपम्-पूर्वोक्तन्यायेननेमिशब्दोत्रनेमिविशिष्ट
चक्रपरः = चक्रञ्चाक्रः पविर्नेमिः पृथक्चक्रस्यवाचकाः
इतिमाधवाचार्येनामानुक्रमणिकायां-पवित्रंचरणं
नेमिः पविश्चक्रंसुदर्शनमित्यादिप्रागुदाहृतपाद्मव
चनेनचनेमिशब्दस्यचक्रपर्यायत्वाभिधानाच्च-दे
वताविशेषपर्यन्तवाचिनोस्यनेमिशब्दस्यतदीयपुं-
स्त्वविवक्षयात्रपुंल्लिङ्गता-उक्तमाधवाचार्यवचनेदे
वताविशेषपर्यन्तवाचित्वेसत्यांपुंस्त्वविवक्षायांपुंलि
ङ्गत्वसम्भवाभिप्रायेणैवचक्रादिशब्दाः पुंलिङ्गाः पठि
ताः। नेमिशब्देनविशेषणाच्चसुदर्शनपरत्वद्रढिमपू
र्वकंप्रसिद्धाग्निपरत्वभ्रमस्यस्फुटतरंनिवृत्तिः। ने
मिना-अनुपदंनेमिशब्दनिर्दिष्टेनपवित्रशब्दवाच्ये
न-अग्न्यादिनेम्यन्तशब्दैर्निष्कर्षितेनपवित्रशब्द
वाच्येनाग्निमयेनसुदर्शनेनेतियावत्-इत्थंच-पवित्र
न्तइत्यादिश्रुतौपवित्रशब्दस्यैवाग्निविशेषितसुदर्शन
वाचकतायास्सिद्धतया-अतप्ततनूरित्यादौताप
क्रियाकरणतासिद्ध्यर्थंपवित्रशब्दार्थस्याग्निसंयुक्त

त्वविशेषणबोधकपदाध्याहारोप्यनावश्यकइतिसिद्ध
म्-तप्ततनुः-अङ्कनलक्षणतापसंस्कारसंस्कृतःपुरु
षः-ब्रह्मणः-भगवतोनारायणस्य-सायुज्यम्-समा
नभोगत्वलक्षणंपरममोक्षम्-सलोकताम्-सालोक्य
लक्षणमोक्षंवा-यथाकामम्-आप्नोति-लभते॥त
थाच-श्रुत्यन्तरोपबृंहणंकुर्वन्त्यानयापिश्रुत्या-ब्र
ह्मणस्सायुज्यकामस्सालोक्यकामश्चतप्तसुदर्शन
चिह्नंधारयेदितिविधिःफलितोभवतीति॥९॥अ
ग्नेरत्रपवित्रशब्दप्रवृत्तिनिमित्तघटकत्ववर्णनम्-प
वित्रशब्दयोगशक्यतावच्छेदकस्यपरिशुद्धिकरत्व
स्यतापसंस्कारलक्षणपरिशुद्धिप्रयोजकधर्मवत्त्व
रूपतयाताहशधर्मत्वेनाग्नेरपितत्रप्रवेशाभिप्रायक
म्-अतश्चपवित्रशब्दस्यपूर्वोदाहृतनिघण्ट्वादिषु
सामान्यतस्सुदर्शनपर्यायतावर्णनस्य-अत्राग्निवि
शेषितसुदर्शनपरतावर्णनस्यचनविरोधइतिबोध्यम्
॥१०॥अथवा-सनेमिसहस्रारज्वालावद्द्रव्यत्वमे
वपवित्रशब्दरूढिशक्यतावच्छेदकमियंश्रुतिर्विवृ
णोति॥तत्राग्निशब्देनज्वालावद्द्रव्यत्वांशोभिधीयते-

सहस्रारशब्देनारसहस्रवत्त्वम्- नेमिशब्देनचनेमिवि
शिष्टत्वम्- यथाचाकाशपदरूढिशक्यतावच्छेदकंश
ब्दाश्रयत्वलक्षणादाकाशासाधारणधर्मादतिरिक्तं
नानुमन्यन्ते- तथास्मद्दर्शनासाधारणधर्मात्सनेमि
सहस्रारज्वालावद्द्रव्यत्वान्नातिरिच्यतेसुदर्शनादि
पर्यायपदरूढिशक्यतावच्छेदकमितितदेवपवित्रश
ब्दस्यापिरूढिशक्यतावच्छेदकंभवितुमर्हति- गवादि
पदशक्यतावच्छेदकंगोत्वादिकमपिहिसास्नादिमत्त्वा
दिरूप तत्तदसाधारणवस्तुसंस्थानादतिरिक्तंनानुम
न्यन्तेत्रय्यन्तनिष्णाताः- यथोक्तम् जिज्ञासाधिक
रणश्रीभाष्ये= संस्थानातिरेकिणोनेकेष्वेकाकारबु
द्धिबोध्यस्यादर्शनात्- तावतैवगोत्वादिजातिव्यव
हारोपपत्तेः- अतिरेकवादेपिसम्प्रतिपन्नत्वाच्चसंस्था
नमेवजातिः- संस्थानंनामस्वासाधारणंरूपमितिय
थावस्तुसंस्थानमनुसन्धेयमिति= इत्थंचपवित्रश
ब्दार्थविवरणरूपायामस्यांश्रुतौपवित्रशब्दप्रवृत्तिनि
मित्तपरतयास्वरसतः प्रतिपन्नानामग्निसहस्रारनेमि
शब्दानांनस्वारसिकतामहाणाम्- नवापवित्रशब्दस्य

सुदर्शनपर्यायनामप्रतिपादकनिघण्ट्वादिवचनस्वारस्य
ग्रहाणमितिबोध्यम्॥ ११॥ पूर्वोक्तयुक्त्याऽग्निपदश
क्यतावच्छेदकस्याग्नित्वस्याग्निपदव्यवहार्यासाधा
रणज्वालामयद्रव्यत्वरूपतायाएववक्तव्यत्वात्-तस्य
चसुदर्शनसाधारणत्वात्- गार्हपत्यादीनामिवसुदर्श
नस्याप्यग्निविशेषरूपतायादुरपह्नवत्वाच्च- पवित्रमि
त्यग्निरितिसामानाधिकरण्यनिर्देशस्सुशोभनः॥ १२
॥ अग्निशब्दश्चयथाप्रकरणं-विशेषणीभूतनतज्ज्वा
लामयद्रव्यमात्रंतदभिमानिदेवतापर्यन्तंवापूर्वोक्त
न्यायेनशक्नोत्येवबोधयितुमितीहापिज्वालामय
द्रव्यंवातद्विशिष्टसुदर्शनाख्यदेवताविशेषंवायथे
ष्टस्वरसतएवाभिधातुमीष्टे॥ १३॥ यद्यपि-कर्तरि
चर्षिदेवतयोरितिसूत्रेपवित्रशब्दस्यदेवतापरता
माश्रित्यनिष्पादनंकृतम्- तथापि-समुदायेषुव
त्ताश्शब्दा अवयवेष्वपिवर्तन्तइतिन्यायेनसूत्र
स्थदेवताशब्दस्यदेवताशेषभूतशरीरबोधकता
याअप्यवर्जनीयत्वात्-पूर्वोक्तन्यायेनात्मविशेषाधि
ष्ठितविग्रहपरतायाअवर्जनीयत्वाच्चदेवताशरीरपर

तायामपिपवित्रशब्दनिष्पत्तिस्सम्भवतीतिबोध्यम्॥१४
॥अत्रकल्पेश्रुतिघटकयोरुद्देश्यवाचकयोरग्निसहस्रा
रपदयोः पूर्वनिर्दिष्टविधेयतावच्छेदकावच्छिन्नपरत्व
मेवस्वारसिकमितिपवित्रपदसन्निकृष्टेतिपदस्योत्त
रत्रानुषङ्गोपिनावश्यकः॥१५॥इत्थञ्चास्याः श्रुतेरेवं
योजनाबोद्धव्या-पवित्रमिति-पवित्रशब्दवाच्यंव
स्तु-अग्निः-अग्निरूपम्-अपृथक्सिद्धिसम्बन्धे
नज्वालामयद्रव्यविशिष्टदेवताविशेषरूपमितिया
वत्-अनेनसुदर्शनभगवतस्स्वासाधारणस्वाभा
विकाप्राकृतदिव्यमङ्गलविग्रहरूपोवह्निः प्रतिकृति
द्रव्यव्यापिवह्निश्चेत्युभयंयथासम्भवंसङ्गृहीतंभव
ति-अग्निः-पवित्रशब्दवाच्यत्वावच्छिन्नेविशेषण
तयानुपदंनिर्दिष्टोज्वालामयद्रव्यविशिष्टदेवतावि
शेषः-सहस्रारः-अरसहस्रविशिष्टदेवताविशेष
रूपः-सहस्रारः-पवित्रशब्दवाच्यत्वावच्छिन्नवि
शेषणविशेषणतयानुपदंनिर्दिष्टोऽरसहस्रविशिष्ट
देवताविशेषः-नेमिः-प्रधिविशिष्टदेवताविशेषरू
पः-नेमिना-पवित्रशब्दवाच्यत्वावच्छिन्नविशेषण

विशेषणविशेषणतापन्नेननेमिविशिष्टदेवताविशेषेण-पवित्रशब्दवाच्येनसनेमिसहस्रारज्वालामयद्रव्यविशिष्टसुदर्शनाख्यदेवताविशेषेणेतियावत्-तप्ततनुः ब्रह्मणः- सायुज्यम्- सलोकतांवा-यथाकामम्- आप्नोतीति॥१६॥ अत्रसाक्षात्परम्परयावा पवित्रशब्दवाच्यत्वावच्छिन्नेऽग्न्यादिपदार्थानां विशेषणतयाऽग्न्यादिपदार्थतावच्छेदकधर्माणां पवित्रशब्दार्थतावच्छेदकघटकत्वंसिध्यति॥१७॥ नन्वत्रपवित्रशब्दस्यसाक्षात्सुदर्शनाख्यदेवताविशेषपरत्वेप्रतिकृत्यैवाङ्कनस्याक्रियमाणतया-नतप्ततनुरित्यत्रतापप्रतिकरणतयादेवताविशेषस्यान्वयोबाधितः-प्रतिकृतिपरत्वेचसहस्रारशब्दार्थान्वयोबाधितः-प्रतिकृतावरसहस्राभावादितिचेन्न-प्रतिकृतावावाहितदेवताविशेषस्यसन्निहिततयाप्रतिकृतिविशिष्टस्यैवनस्यतापसंस्कारंप्रतिकरणतयातस्यनतप्ततनुरित्यत्रान्वयेबाधकाभावेनपवित्रशब्दस्यदेवताविशेषपरत्वेक्षतिविरहात्-सहस्रारशब्दस्यपूर्वोक्तन्यायेनारसहस्रव

त्सुदर्शनदेवताविशिष्टपरत्वसम्भवेन पवित्रशब्दस्य देवताधिष्ठितप्रतिकृतिपरत्वेपिक्षत्यभावात्- प्रतिकृतौदेवताविशेषसन्निधानस्यतापसंस्कारप्रतितस्य करणतायाश्चासत्त्वे- सुदर्शनमहाज्वालकोटिसूर्यसमप्रभ- अज्ञानान्धस्यमेदेवविष्णोर्मार्गप्रदर्शयेत्यादिमन्त्रस्यप्रतिकृतिसन्निहितदेवताप्रार्थनापरस्याङ्कनकर्मणिविनियोगप्रतिपादकशास्त्राविरोधापत्तेश्च॥१८॥ तस्मात्पक्षद्वयेपिनकश्चिद्दोषस्सम्भवतीत्यवधेयम्॥१९॥ इति- पवित्रमित्यग्निरित्यादिश्रुतिव्याख्यानम्॥२०॥ ॥अथऋग्वेदगता-

चक्रंबिभर्तिवपुषाभितसंबलंदेवानाममितस्य
विष्णोः। सएतिनाकंदुरिताविधूयप्रयान्तिय
द्यतयोवीतरागाः ॥३॥

इतिश्रुतिर्व्याख्यायते॥२१॥ अस्याश्श्रुतेरित्थंविवरणंबोद्धव्यम्- सएतीत्यत्रतच्छब्दानुरोधेनात्रयच्छब्दोध्याहार्यः-यःपुरुषः-देवानाम्-सुराणाम्-बलम्-रक्षकम्- अमितस्य- अपरिच्छिन्न

स्य- असङ्कोचेनस्वरूपतोगुणतश्चापरिच्छिन्नत्व बोधकेनानेनसमस्तकल्याणगुणाकरत्वंविवक्षित म्- विष्णोः- नारायणस्यसम्बन्धि- अभितप्तम्- वह्निसन्तप्तम्- चक्रम्- सुदर्शनम्- वपुषा-शरीरे ण-बिभर्ति- धारयति- वह्निसन्तप्तचक्रसंयोग जन्यचिह्नंबाहुनाधारयतीतियावत्- वपुश्शब्दो ऽत्रबाह्ववच्छिन्नशरीरभागविषयश्श्रुत्यन्तरादेक कण्ठ्यात्-सः- तप्तचक्रलाञ्छनधारिबाहुःवपु षः-दुरिता-सुपांसुलुगित्याद्यनुशासनेनविभक्ति लोपश्छान्दसः-दुरिता -पापानि-विधूय-अव धूय-नाकम्-कम्-सुखम्-अकम्-दुःखम्-त न्नविद्यतेयस्मिंस्तादृशंनाकम्-दुःखरहितंपरमप दम्-एति- प्राप्नोति- नाकशब्दस्यात्रार्वाचीनस्वर्ग परत्वभ्रमव्यावर्तनायाह-प्रयान्तीत्यादि- वीतरा गाः-निश्शेषनिवृत्तैहिकामुष्मिकसकलसांसारि कभोगतृष्णाः-यतयः- संन्यासिनोपि-यदिति सामान्यतोनपुंसकनिर्देशोवस्तुत्वाभिप्रायकः- यत्- यादृशंवस्तु- वस्तुत्वाभिप्रायेणेवचनपुंस

पान्थावयमपि-एभिः-सन्निहितैः-उरुक्रमस्य-उर
वः-महान्तः-ईश्वराभिमानिनोऽपीतराविशेषेणाव्याप्त
वन्तः-क्रमाः-पादविन्यासाः-यस्यतस्य-स्वेतरेश्वी
श्वराभिमानिनोन्यांश्चसर्वानविशेषेणपदामूर्धन्या
क्रम्यपारमार्थिकंनिजसर्वस्वामित्वलक्षणंसर्वस्मा
त्परत्वंप्रस्फुटंप्रकाशितवतस्त्रिविक्रमस्यभगवतो
नारायणस्य-चिह्नैः-असाधारणलक्षणैस्सुदर्श
नपाञ्चजन्यकौमोदकीनन्दकशार्ङ्गरूपैः-अङ्किताः
-अभिसंयुक्तत्संयोगेनकृताङ्कास्सन्तः-लोके
वैष्णवपरमपदाख्येवक्ष्यमाणस्थाने-सुभगाः-शो
भनैश्वर्यशालिनः-मुक्तैश्वर्यशालिनइतियावत्॥
ऐश्वर्यस्यसमग्रस्यवीर्यस्ययशसश्श्रियः-ज्ञानवै
राग्ययोश्चैवषण्णांभगइतीरणेति विष्णुपुराणषष्ठां
शपञ्चमाध्यायवचनेनभगशब्दोह्यैश्वर्यपरः-भ
वाम-भवेम-हि-यतः-ये-यादृशास्तादृशाअपि-
मोक्षार्थसर्वस्वामिप्रपदनेसर्वेषामधिकारेणनिर्ण
याविषयाब्राह्मणक्षत्रियवैश्यशूद्रादयस्सर्वएवे
तियावत्-यथोक्तंभरद्वाजसंहितायांन्यासोपदेशे

प्रथमाध्याये- प्राप्तुमिच्छन्परांसिद्धिंजनस्सर्वोप्य
किञ्चनः- श्रद्धयापरयायुक्तोहरिंशरणमाश्रयेत्
॥ नजातिभेदंनकुलंनलिङ्गंनगुणाक्रियां ॥ नदेशका
लौनावस्थांयोगोह्ययमपेक्षते ॥ ब्रह्मक्षत्रविशश्शू
द्रास्स्त्रियश्चान्तरजास्तथा । सर्वएवप्रपद्येरन्स
र्वधातारमच्युतमिति- तृतीयाध्याये ॥ ब्राह्मणः
क्षत्रियोवैश्यश्शूद्रोनारीतथेतरः- चक्राद्येरङ्क
येज्ञात्रमात्मीयस्याखिलस्यचेतिच ॥ निर्णयावि
षयपरोयंयच्छब्दस्तच्छब्दनिर्देशनिरपेक्षः । अ
तएव-यः कश्चित्पुरुषआगतः-येनकेनचिदुपा
येनेदंसाधनीयमित्यादिषुतच्छब्दनिरपेक्षोयच्छ
ब्दः- अत्रसर्वत्रनिर्णयाविषयपरोहियच्छब्दः-
नच- कश्चिदित्यादिकिंशब्दसाहचर्यणैवहियच
च्छब्दप्रयोगोनियतइतिवाच्यंस्वार्थसशक्त्यास्सम
र्थयतःपदस्यपदान्तरसाहचर्यनिर्बन्धेकारणाभा
वात्-तादृशनियमावेदकप्रमाणाभावाच्च-अतए
वश्रीरामायणेऽयोध्याकाण्डेसप्तमेसर्गे- ज्ञाति
दासीयतोजाताकैकेय्यास्तुसहोषिता । प्रासादंच

न्द्रसङ्काशमारुरोहयदृच्छयेत्यत्रयच्छब्दोयथो
क्तविषयस्तच्छब्दनिरपेक्षः प्रयुक्तः-यतोजाता-
यत्रकुत्रचिज्जातेति-यतः कुतश्चिज्जातेतिचव्या-
ख्यातारोप्युडालिगोविन्दराजप्रभृतयोत्रव्याचख्युः
-लाञ्छिताः-पूर्वोक्तरीत्याभगवदायुधचिह्निता
स्सन्तः-विष्णोस्तत्परमंपदंगच्छन्ति-तस्माद्वयम
पीत्यादिनापूर्वेणासम्बन्धः-यतोनियमविशेषनैर
पेक्ष्येणसर्वएवयथार्हंभगवल्लाञ्छनचिह्नितास्तद्वि
ष्णोःपरमंपदंगच्छन्ति-ततोवयमपिस्वतःप्रासंनि
रूपाधिकसर्वस्वामिचिह्नधारणंकुर्वाणानिरतिशय
मुक्तैश्वर्यंलभेमहीतिमुमुक्ष्वनुसन्धानंफलितम्-
यद्वा-ये तद्विष्णोःपरमंपदंगच्छन्ति-तेयतोलाञ्छि
ताएव-ततोवयमपितादृशाएवसन्तोमोक्षंलभेमही
तियोजनाबोध्या= अस्यांयोजनायां-अतप्ततनू
र्नतदामोअश्नुत इतिश्रुत्युक्तरीत्यातप्तचक्राद्यङ्क-
नस्यान्वयव्यतिरेकसहचाराभ्यांमोक्षकारणत्वदर्शना
द्वयमपितप्तचक्राद्यङ्कितास्सन्तोमोक्षंगच्छामेतिमु
मुक्ष्वनुसन्धानंफलितंभवति-सर्वधा-मोक्षकामो

भगवल्लाञ्छनधारणंकुर्यादितिविधिरनयाश्रुत्या फलितोद्रष्टव्यइति ॥३१॥ इति- एभिर्वयमित्यादि श्रुतिव्याख्यानम् ॥३२॥ अथ-ऋग्वेदीयबाष्कलशाखागता

प्रतेविष्णोअब्जचक्रेपवित्रेजन्माम्भोधिंततर्वेचर्षणीन्द्राः। मूलेबाह्वोर्दधतेन्येपुराणालिङ्गान्यङ्गेतावकान्यर्पयन्ति॥५॥

इतिश्रुतिर्व्याख्यायते ॥३३॥ अस्याश्रुतेरित्थंविवरणंबोद्धव्यम्-हेविष्णो- चर्षणीन्द्राः-कृषेरादेश्चचेत्युणादिद्वितीयपादसूत्रेण- कृषेरनिस्स्यादादेश्चकारश्चेत्यर्थकेन- कृषविलेखनइत्यस्माद्धातोरनिप्रत्ययेककारस्यचकारे- लघूपधगुणेणत्वेचकृते- चर्षणिरितिशब्दोनिष्पद्यते- कर्षति-अशुद्धेभ्योनिष्कर्षतीतिव्युत्पत्त्याशोधयतीत्यर्थपर्यवसन्नयाचर्षणिशब्दइहशोधकपरः-पवमानस्सुवर्जनः- पवित्रेणाविचर्षणिः-यःपोतासपुनातुमा- इतिश्रुतौशुद्ध्यर्थकपदप्रयोगस्थानेहिविचर्षणिशब्दःश्रूयते- तृतीयान्तपवित्रशब्दान्व

ययोग्यतयाशः अर्थैकशब्दएवच= येनदेवाःपवि
त्रेण- आत्मानंपुनतेसदा= तेनपवित्रेणशुद्धेनपू
ताः= इत्यादिश्रुतिषुबहुलंश्रूयते- अतश्च-पव
मानइत्यादिश्रुतेरयमर्थः-पवित्रेण-सुदर्शनेन-
विचर्षणिः-स्वात्म शोधकः- अतएव-स्व
र्जनः-वैष्णवपरमपदाख्यस्वर्गविशेषयोग्यजन
भूतः-यः पवमानः-पोता- अन्येषामपिशोधयि
ता-समापुनात्विति- तस्मात्स्थानप्रमाणेनापिच
र्षणिशब्दश्शोधकपरोऽवगम्यते- तथाच-च
र्षणीन्द्राः-शोधकश्रेष्ठाः-स्वात्मनस्संसारनि
वर्तनोपयिकनिरतिशयशुद्धिसम्पादनप्रवृत्ताइ
तियावत्= चर्षणीन्द्राः- ज्ञानवन्तः-प्रकाशव
न्तोवा- विचक्षणाग्रेसरायोगिवर्याइत्यप्याहुः-
जन्माम्भोधिम्-संसारसागरम्-जन्मशब्दोत्रज
न्मजरामरणादिहेतुसंसारपरः-तर्तवे- तर्तुम्-तु
मर्थेसेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यै
कध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः-३-४-९-
इत्यनुशासनेनतरतेस्तुमर्थेछान्दसस्तवेन्-पवित्रे-

अग्निसंयुक्तस्वसंयोगजन्याङ्कनद्वारापरिशुद्धिकरण योग्यतावती- वह्निसंतप्तेइतियावत्- ते- तवसम्बन्धिनी- अब्जचक्रे-शङ्खचक्रे-बाह्वोः-भुजयोरितिसप्तमी-मूले- अंसभागे-प्रदधते-प्रकर्षेणाधारयन्ति- अग्निसंयुक्ततत्संयोगजन्याङ्कनद्वाराधारयन्तीतियावत्-व्यवहिताश्च-१-४-८२-इत्यनुशासनेन-गत्युपसर्गसञ्ज्ञकाश्छन्दसिव्यवधानेनप्रयुक्ताअपिसाधवइत्यर्थकेनप्रेत्यस्यव्यवहितस्याप्यत्रसाधुत्वमवसेयम्- अन्ये- अपरेकेचन- पुराणाः-पुरातनानुष्ठातारोमहर्षयः- तावकानि- त्वत्सम्बन्धीनि-लिङ्गानि-चिह्नरूपाणिसुदर्शन पाञ्चजन्यकौमोदकीनन्दकशार्ङ्गाख्यानिपञ्चायुधानि- अङ्गे-शरीरे- अर्पयन्ति-अग्निसंयुक्ततत्संयोगजन्यचिह्नरूपेणविन्यस्यन्ति- अंसयुगलललाटमूर्धहृदयादिरूपपञ्चायुधधारणयोग्यावान्तरस्थानभेदस्स्मृत्याद्युपबृंहणैरवगन्तव्यः- अत्र- पवित्रे- इत्यस्याग्नितप्ते इत्यर्थपर्यवसायित्वं -अर्पयन्तीत्यस्यतापसंस्कारपर्यवसायित्वंचशा

खान्तरीयपाठभेदानुरोधेनसिद्ध्यति= सामवेदेचेय
मेवश्रुतिः = प्रतद्विष्णो अब्जचक्रे ऋतमेजन्माम्भो
धिंततर्वेचर्षणीन्द्राः । मूलेबाह्वोर्दधतेन्येपुराणा-
लिङ्गान्यङ्कृतसायुधान्यर्पयन्तइत्येवंभूतानुपूर्वीका
दृश्यते= ईदृशानुपूर्वीकाचेयंश्रुतिः-उदीच्येषुस्मा
र्तनिबन्धनग्रन्थेषु-रामार्चनचन्द्रिकायांपञ्चमपट
ले-आनन्दवनसन्न्यासिना= रामनाममाहात्म्याख्य
ग्रन्थेपञ्चमप्रकरणेद्वारकाशङ्करमठाधिपतिपरम्प
राघटकेनाच्युताश्रमसन्न्यासिना= निर्णयसिन्धावा
षाढमासघट्टेकमलाकरभट्टेनचोदाहृतादृश्यते-
अत्र- तप्तपञ्चायुधरूपाणिलिङ्गान्यर्पयन्तइत्यने
नार्पणंतापसंस्काररूपमितिस्पष्टम्-एवमत्रपवि
त्रशब्दस्थानेऋतप्तपददर्शनात्पूर्वोक्तरीत्यापवि
त्रशब्दस्याग्नितप्तपर्यवसायित्वंसिद्ध्यति-इत्थञ्चा
स्यांश्रुतौ- मोक्षोपयिकशुद्धिविशेषकामाः केचन
शङ्खचक्राभ्यांद्वाभ्यामेवतप्ताभ्यामङ्कनंधारयन्ति-
अपरेतुपञ्चभिरप्यायुधैस्तप्तैरङ्कनंधारयन्तीतिक
ल्पद्वयमुक्तंभवति- तथाचानयापिश्रुत्यामुमुक्षुस्त

सचक्रादिचिह्नंधारयेदितिविधिःफलितोभवतीति॥
॥३४॥ इति- प्रतेविष्णावित्यादिश्रुतिव्याख्यानम्॥
॥३५॥ अथ-

धृतोर्ध्वपुण्ड्रःकृतचक्रधारीविष्णुंपरंध्यायति
योमहात्मा। स्वरेणमन्त्रेणसदाहृदिस्थितंप
रात्परंयन्महतोमहान्तम्॥६॥

इतियाजुषकठशाखागताश्रुतिर्व्याख्यायते॥३६॥
अस्याःश्रुतेर्विवरणमित्थंबोद्धव्यम्-यः-पुरुषः-
महात्मा- महामनाः- मनसोमहत्त्वंसत्वगुणाधिक्य
म्- जायमानंहिपुरुषंयंपश्येन्मधुसूदनः। सात्त्विक
स्सतुविज्ञेयस्सवैमोक्षार्थचिन्तकइतिश्रीनारायणी
यवचनोक्तरीत्यासत्त्वगुणातिशयेनविशुद्धान्तः
करणोमुमुक्षुरितियावत्- अतएव-गीतासु-सप्त
माध्याये- बहूनांजन्मनामन्तेज्ञानवान्मांप्रपद्यते॥
वासुदेवस्सर्वमितिसमहात्मासुदुर्लभइत्यत्र-नवमा
ध्याये- महात्मानस्तुमांपार्थदैवींप्रकृतिमाश्रिताः।
भजन्त्यनन्यमनसोज्ञात्वाभूतादिमव्ययमित्यत्रचभ
गवतापीदृशएवाधिकारीमहात्मशब्देननिर्दिष्टः-सः-

नादृशोमुमुक्षुरधिकारी- यत्तदोर्नित्यसम्बन्धात्तच्छ
ब्दइहप्राप्तोभवति- कृतचक्रधारी- कृतं- प्रतिष्ठार्च
मुकुताग्नितापादिभिस्संस्कृतम्- चक्रम्- पाञ्चज
न्यसहितस्सुदर्शनम्- सुदर्शनपाञ्चजन्यावुभावपी
तियावत्- धारयति ताच्छील्येनेतिकृतचक्रधारी-
अत्र ताच्छील्यार्थकणिनिप्रत्ययवशेनसदाधारण
सिद्ध्या कुताग्निसंतप्तचक्रादिसंयोगजन्याङ्कनसुरवे
नसार्वकालिकतद्धारणलाभानुरोधेनप्रमाणान्तरसि
द्धकुताग्नितापादिसंस्कार संस्कृतपरोभवतिकृत
शब्दः- शाखान्तरपाठानुरोधेनचात्रचक्रशब्दउभयपरः
-उदाहृताहि-धृतोर्ध्वपुण्ड्रोदरचक्रधारीमृदाविष्णुं
ध्यायतियोमहात्मा-सयातिनाकंदुरितविधूयविश
न्तियद्यतयोवीतरागाइत्येवमानुपूर्वीकाथर्वणिकश्रु
तीराम्नाममाहात्म्येद्वारकाशङ्करमठाधिपतिपरम्प
रान्तर्भूतेनाच्युताश्रमेण- अत्रश्रुतौ- समानप्रकरणो
दरचक्रधारीतिशङ्खचक्रधारित्वंहिस्पष्टमभिधीय
ते-धृतोर्ध्वपुण्ड्रः-धृतमृदूर्ध्वपुण्ड्रस्सन्-उदा
हृताथर्वणिकश्रुतौ-मृदाधृतोर्ध्वपुण्ड्रइत्युक्त्यात

दैककण्ठ्येनेहापिचन्दनादिव्यावृत्तिर्मुमुक्षुविषया
बोद्धव्या- विष्णुंपरं - नारायणमेव - मामेवयेप्रपद्य
न्तेमायामेतान्तरन्तितइत्यादिभिर्भगवदनन्यभक्त
त्वलक्षणपारमैकान्त्यस्यैवहिमोक्षोपायत्वमभिहि
तम्- ध्यायति - उपरिहिदेवेभ्योधारयतीत्यादावि
वध्यानविधिपरत्वमत्रग्राह्यम् - अप्राप्तार्थपरत्वावि
शेषात् - तथाच मोक्षकामस्तसचक्राद्यङ्कनोर्ध्वपुण्ड्र
धारीसन्ननन्यया भक्त्यानारायणमुपासीतेतिविधिर
त्रफलितोद्रष्टव्यः। ज्योतिष्टोमेनस्वर्गकामोयजेते-
त्यादौज्योतिष्टोमयागस्यस्वर्गसाधनतालाभवदत्रा
पितप्तचक्राङ्कनोर्ध्वपुण्ड्रधारणपूर्वकानन्यभगवदुपा
सनस्यार्थवशान्मोक्षसाधनत्वलाभसम्भवादस्या
श्श्रुतेरुदाहृताथर्वणिकश्रुत्यैककण्ठ्यं बोध्यम्-
यद्वा-यः - कृतचक्रधारीधृतोर्ध्वपुण्ड्रश्चसन्वि
ष्णुंपरंध्यायति- सः - महात्मा-महान्-अपरिच्छिन्नः
आत्मा-बुद्धिः - ज्ञानम्- यस्यसमहात्मा-सकल
पापनिवृत्त्यनन्तरकालिकनिरवधिकविकासलक्ष
णज्ञानानन्त्यशालीभवति-मुक्तोभवतीतियावत्-

वालाग्रशतभागस्यशतधाकल्पितस्यच-भागोजी
वस्सविज्ञेयस्सचानन्त्यायकल्पतइतिश्वेताश्वतरो
पनिषत्पञ्चमाध्यायगतश्रुत्यानिश्शेषाविद्यानिवृ
त्त्यनन्तरकालिकनिरवधिकविकासलक्षणज्ञानान
न्त्यरूपैवहिमुक्तिरभिधीयते-अथवासर्ववेदान्तप्र
त्ययन्यायेनविद्यासुगुणोपसंहारकरणवत्-सएति
नाकमित्याद्याथर्वणिकश्रुतिभागमत्र-स्वरेणमन्त्रेणे
त्याद्यत्रत्यभागंतत्रचसमाहृत्यद्वयोरपिश्रुत्योरैका
र्थ्यंनिर्वाह्यम्-केनकरणेनकीदृशविशेषणाविशिष्टं
कदाध्यायतीत्याकाङ्क्षायांकारणायप्रवृत्तस्वरेणेत्या
द्यर्थम्-परात्-परत्वेनगीयमानाद्ब्रह्मरुद्रादिरूपा
त्कृत्स्नादपिजीवात्मनः-यत्तु-परम्-उत्कृष्टम्-
अनवधिकातिशयासङ्ख्येयकल्याणगुणगणम् सा
मान्यतोवस्तुत्वविवक्षयायदितिनपुंसकनिर्देशः।
यत्तदोर्नित्यसम्बन्धात्तच्छब्दइहानुसन्धेयः-वि
धेयप्राधान्याच्चसपुंलिङ्गः-तम्-तादृशम्-परात्प
रमितियावत्-अनेनगुणतआनन्त्यमुक्तंभवति-
महतः-महत्त्वेनगीयमानादाकाशादिरूपात्कृत्स्नाद

पिवस्तुनः - महान्तम् - विपुलम् - अनेनस्वरूपतआ
नन्त्यमुच्यते - हृदि - हृदयगुहायाम् - स्थितम् - आ
श्रितवात्सल्यादुपासनार्थंकृतसन्निधानम् - यस्मा
त्परंनापरमस्तिकिञ्चित् ॥ अणोरणीयान्महतोम
हीयानात्मागुहायांनिहितोस्यजन्तो रित्यादिश्रु
त्युक्तमिह विशेषणत्रयविवक्षितम् - इदृशविशेषण
विशिष्टम् विष्णुम् - स्वरेणमन्त्रेण - प्रणवेनमन्त्रेण
- यद्वेदादौस्वरः प्रोक्तोवेदान्तेचप्रतिष्ठितइत्यादि
श्रुतिषुप्रणवेप्रसिद्धप्रयोगस्स्वरशब्दः - यद्वा - त
त्तद्विहितोदात्तानुदात्तादिस्वरेणसहानुसन्धीयमा
नेनतत्तत्सर्वविद्याकरणमन्त्रेण - सदा - आप्रयाण
महरहः प्रतिनियतकालेषु - ध्यायतीत्यन्वयः - सर्व
धाप्यनयाश्रुत्यापूर्वोक्तएवविधिःफलितोद्रष्टव्य
इति ॥ ३७ ॥ इतिधृतोर्ध्वपुण्ड्रइत्यादिश्रुतिव्याख्या
नम् ॥ ३८ ॥ अथ -

दक्षिणेतुभुजेविप्रोबिभृयाद्वैसुदर्शनम् ॥ स
व्येतुशङ्खंबिभृयादितिब्रह्मविदोविदुः ॥ ७ ॥

इत्याथर्वणिकमहोपनिषदन्तर्गतब्रह्मसूक्तगताश्रु

तिर्व्याख्यायते॥३९॥ अस्याश्श्रुतेर्विवरणमित्थंबो
द्धव्यम्-विप्रः-ब्राह्मणः-सुदर्शनम्-चक्रम्-द
क्षिणे-भुजेतु-भुजएवबिभृयाद्-धारयेदेव-श
ङ्खम्-श्रीपाञ्चजन्यम्-सव्ये-भुजेतु-सव्यभुज
एव-बिभृयात्-अत्रोभयत्रधारणमूपूर्वोक्तरीत्या
श्रुत्यन्तरोपबृंहणाद्यनुरोधेनवह्निसन्तप्तसंयो
गजन्याङ्कनरूपेणाबोद्धव्यम्-एवमत्रतुकारणप्रति
पन्नोनियमस्सुदर्शनपाञ्चजन्ययोर्द्वयोरपिधा
रणकल्पेषुबोद्धव्यः-अतएकस्यैवधारणाकल्पे
ष्वेकस्यैवद्वयोरपिभुजयोर्धारणेपिनक्षतिः-एकस्यै
वधारणमपि-चक्रंवाशंखंचक्रेवाधारयेत्सर्वमे
वेतिभरद्वाजसंहितापरिशिष्टद्वितीयाध्यायवच
नेन-केचित्तुचक्रशङ्खौद्वौप्रतप्तौबाहुमूलयोः-धा
रयन्तिमहात्मानश्चक्रमेकन्तुवापरइतिबृहद्धारी
तस्मृतिद्वितीयाध्यायवचनेन-एवंजातीयकैरन्यै
श्चवचनैस्सिद्धंबोद्धव्यम्-इति-इत्थम्-ब्रह्मवि
दः-वेदविदः-अन्यशाखिनोपीतियावत्-विदुः-
जानन्ति-स्वशाखाप्रतिपाद्यतयावगच्छन्तीतिया

वत्-अत्र-बिभृयादितिविधिंकृत्वा-इतिब्रह्मविदो
विदुरित्यनेनशाखान्तरस्थान्यपिश्रुतिवाक्यानिवि
धिप्रत्यया श्रवणेनानुवादसरूपाण्यर्थप्राप्तार्थकत्वे
नेत्थमेवविधिपराणीतीयंश्रुतिः प्रतिपादयतीत्यवग
म्यते-यद्वा-ब्रह्मविदः॥ मोक्षोपयिकब्रह्मविद्या
निष्ठामुमुक्षवइत्थमनुसन्दधतइत्यर्थः-ततश्चतस
द्दर्शनपाञ्चजन्यधारणस्यमोक्षोपयिकब्रह्मविद्या
ङ्गत्वंप्रतिपादितंभवति-अत्र-विप्रोबिभृयादित्यनेन
क्षत्रियादीनांधारणाधिकाराभावोनप्रतिपत्तव्यः-अ
पितुविप्रेणचक्राङ्कधारणमवश्यंकर्तव्यम्-तदेवविप्र
त्वंपरिपूर्णमस्यासिद्धंभवति-अन्यथातस्यप्रत्यवा
यभूयस्त्वंभवतीत्ययमर्थः प्रतिपत्तव्यः-अतएवहि
शाट्यायनिकश्रुतिरपिश्रावयति-विष्णुंक्रान्तंवासु
देवंविजानन्विप्रोविप्रत्वंगच्छतेतत्त्वदर्शीति-साङ्ग
ब्रह्मविद्याया एवात्रविजानन्नित्यनेनविवक्षितत्वात्त
दर्शनादिधारणस्यापितदङ्गान्तर्भूतत्वादनयाश्रुत्या
तस्यापिविप्रत्वपूर्णसिद्धिप्रयोजकत्वमभिहितंभवति
-क्षत्रियादीनामधिकारसद्भावेपि-तस्मादाहिताग्नि

नानृतं वदेदित्यनानृतकथनस्य सर्वेषामेव पातकहे तुत्वेऽव्याहितान्नेः पातकभूयस्त्वहेतुत्वमात्रवत् च क्राङ्काधारणस्य ब्राह्मणविषये पातकभूयस्त्वहेतुत्वमात्रमेवेह विवक्षितम्- अत एव- बिभृयुस्तज्जनास इति- ये गच्छन्ति हि लाञ्छिता इति च पूर्वोदाहृतश्रुत्यन्तरे सर्ववर्णाधिकारित्वं प्रतिपादितम्-उपबृंहणेष्वप्ययमर्थस्स्फुटीभविष्यत्युपरिष्टात्- अतोत्र विप्रशब्द उपलक्षणार्थ एव ग्राह्यः- प्रस्फुटाकारविधिस्वरूपदर्शनादस्याः श्रुतेर्नाविधिकल्पनाश्रयासोपीति॥ ४०॥ इति दक्षिणे तु भुज इत्यादिश्रुतिव्याख्यानम्॥ ४१॥ अथैतत्परिच्छेदव्याख्यातानामखिलश्रुतीनामुक्तार्थप्रमाणत्वेन परिग्रहबीजभूतं प्रमाणजातमुपन्यस्यते॥ ४२॥ श्रीपाञ्चरात्रशास्त्रे पारमेश्वरसंहितायां प्रतिष्ठाध्याये चक्रप्रतिष्ठायाम्- तत्तत्स्थापनकाले तु तत्तत्सञ्ज्ञान्मनून् जपेत्॥ विद्यां गदामित्याद्यं यत्पाठयेत्तद्द्विजोत्तमान्॥ चमूषच्चयेन इति च प्रते विष्णो इति स्त्वचौ॥ पाठयेद्द्ब्रह्मचान्यश्चाच्छाकुनं सूक्तमेव च॥ धृतोर्ध्वपुण्ड्रः कृत च

केतिमन्त्रंकठान्परम्॥ पवित्रन्तेविततमित्येतम्मन्त्रं
यजुर्मयान्॥ क्षरोहरेतिसामद्वान्पवित्रमित्यग्निरि
त्यपि॥ एभिर्वयमुरुक्रमस्येतिचाथर्वणान्द्विजान्॥
एवंसंस्थाप्यविधिवन्नवभिःकलशैस्ततः॥स्नापये
द्ब्रह्मसूक्तस्थैर्मन्त्रैरष्टाभिरेवचेत्युक्तम्॥४३॥एवं
तत्रैवस्नापयेदित्यनुवृत्तौ- धृतोर्ध्वपुण्ड्रइतिचयातु
धानीगतेनवै॥दक्षिणेतुभुजेविप्रइतिपश्चिमगेनवै॥
विष्णुनात्तमश्नन्तीतिवायुदिक्संस्थितेनत्वित्युक्त
म्॥४४॥ एवंतत्रैवसंहितायामुत्सवाध्यायेरक्षार्थं
चूर्णस्नपने-दक्षिणेतुभुजेविप्रइतिप्राक्संस्थितेन
तु॥ निर्विक्षेपस्कृषणमितिवह्निगतेनतु॥ प्रतेवि
ष्णो[illegible]चक्रेइतियाम्यगतेनतु॥एभिर्वयमुरु
क्रमस्येतियातुधानीगतेनवै॥ धृतोर्ध्वपुण्ड्रःकृ
तचक्रेतिपश्चिमगेनतु॥पवित्रमित्यग्निरितितत्तोवा
युगतेनतु॥चरणंपवित्रंविततमितिसोमगतेनतु॥
लोकस्यद्वारमर्चिमदिति रुद्रगतेनतु॥मन्त्रैरेतैस्तु
चाष्टाभिरन्यैस्सौदर्शनैस्तथा॥संस्नाप्यमध्यकु
म्भेन शुद्धोदैरभिषिञ्चेत्युक्तम्॥४५॥अत्रन्तत्त

त्स्थापनकालेतु तत्तत्सञ्ज्ञान्मनून् जपेदितिप्रथमं तत्तत्स्थापने तत्तत्सञ्ज्ञाघटितमन्त्राणांजसव्य त्वंविधाय- ततः- चमूषच्छ्येनइत्यादिमन्त्राणां चक्रप्रतिष्ठायांविनियोगात् ॥ एवंस्नपनकरणत याकांश्चिन्मन्त्रान्विनियुज्य- तथान्यैरपिसौदर्शनैरितिसामान्यतस्तदितरसौदर्शनमन्त्राणामपि करणतयाविनियोगवचोभङ्ग्यापूर्वविनियुक्तानामपि सौदर्शनत्वव्यञ्जनाच्चसुदर्शनपरत्वंसिद्धम्॥४६ ॥एवमत्र- प्रतेविष्णावितिखिलमन्त्रस्यबह्वृचपाठ्यत्वाभिधानादृग्वेदान्तर्गतत्वम्- धृतोर्ध्वपुण्ड्रः कृतचक्रधारीतिखिलमन्त्रस्ययजुर्वेदिकठशाखिपाठ्यत्ववर्णनेनयजुर्वेदीयकठशाखान्तर्गतत्वम्- पवित्रमित्यग्निरितिखिलमन्त्रस्यसामवेदिपाठ्यत्वाभिधानेनसामवेदान्तर्भूतत्वम्- एभिर्वयमुरुक्रमस्येतिखिलमन्त्रस्याथर्ववेदिपाठ्यत्ववर्णनेनाथर्वणत्वञ्चसिद्धंभवति॥४७॥ एवमत्र- दक्षिणेतुभुजेविप्रइतिखिलमन्त्रस्य- निचिक्षेपस्कषणमितिखिलमन्त्रस्यचस्नपनेकरणतयाविनियु

ज्यमानैरन्यैर्वैदिकमन्त्रैस्सहैवविनियुज्यमानतया वैदिकमन्त्रत्वंतावत्सिद्धम् ॥ ४८ ॥ एवमत्र-स्नापयेद्ब्रह्मसूक्तस्थैर्मन्त्रैरष्टाभिरेवचेत्युक्तंब्रह्मसूक्तमाथर्वणिकमहोपनिषदन्तर्गतसूक्तविशेषइति-तदन्तस्था अष्टौमन्त्राश्च-सर्वस्यवशिनमित्याद्याश्चत्वारः-। दक्षिणेतुभुजेविप्रइत्याद्याश्चत्वारश्चेतिचविज्ञायते- प्रायशस्तेषामेवाष्टानाम्मन्त्राणामष्टमन्त्रविनियोगस्थलेषु भगवच्छास्त्रेविनियोगदर्शनात्तेषाम्महोपनिषदन्तर्गतत्वेनब्रह्मसूक्तगतत्वेनचतत्रतत्रनिर्देशाच्च ॥ ४९ ॥ उक्तंहि पारमेश्वरसंहितायामेवस्नपनाध्यायेसहस्रकलशस्नपने -पौरुषेणतुसूक्तेनसमस्तेनशनैश्शनैः । स्नापयेद्देवदेवेशम्मध्यस्थनवकेनतु ॥ यद्वासर्वस्यवशिनमित्याद्यैर्मनुभिःक्रमात् । महोपनिषदन्तस्थैर्दिक्स्थितैः कलशाष्टकैः । एकएवनारायणइतिमध्यगतेनविति ॥ ५० ॥ अत्रसहस्रकलशस्नपनेसर्वमध्यस्थितकलशनवकेःषदिक्स्थितकलशाष्टकेनस्नपनस्य-सर्वस्यवशिनमित्याद्यैरष्टभिर्म

न्त्रैः कर्तव्यताविधानात्- तेषाम्मन्त्राणाम्महोप
निषदन्तभागस्थितत्वाभिधानात् - मध्यस्थितम
हाकलशेनस्नपनस्य - एक एवनारायणइति महो
पनिषदाद्यमन्त्रेणाकर्तव्यताविधानात् - महोपनिष
दाद्यन्तक्रोडीकारदर्शनात् - स्नापयेद्ब्रह्मसूक्तस्थै
र्मन्त्रैरष्टाभिरेवचेति प्रागुदाहृतस्थलेपिभिन्नम
न्त्रानुपादानेनसमानप्रकरणास्थानाममीषामेवा
ष्टानाम्मन्त्राणांविवक्षितताया आवश्यकत्वाच्चम
होपनिषदन्तर्गतंब्रह्मसूक्तम् - तत्रापिचान्तिम
भागस्थाः - सर्वस्यवशिनमित्याद्या अष्टौमन्त्रा
इत्यवगम्यते ॥ ५१ ॥ विष्णुतत्त्वसंहितायांचर्या
पादेषष्ठेपटले - दिव्यन्तरिक्षभौमानामुत्पातानाम्प्र
शान्तये। प्रत्यृचंजुहुयादाज्यंपुंसूक्तेनशतंशत
म्। सर्वस्यवशिनेत्याद्यैश्चतुर्भिश्चशतंदधि ॥ दक्षि
णेतुभुजेत्याद्यैश्चतुर्भिश्चापितण्डुलैरित्युत्पातशा
न्तिहोमप्रकरणे - प्रथमम् - सर्वस्यवशिनमित्या
द्यानांचतुर्णाम् - ततः - दक्षिणेतुभुजइत्याद्यानां
चतुर्णाञ्चक्रमेणहोमकरणताविधानादिमन्त्रा

ष्टोमन्त्रा अनेनैवक्रमेणोक्तब्रह्मसूक्तान्तस्थाइतिवि ज्ञायते॥५२॥ तथाच-यदिदंब्रह्मसूक्तंनाम-सह स्रशीर्षेत्याद्येकोनविंशतिमन्त्रात्मकोवेदभागोदेवा र्चनप्रतिष्ठास्नपनादिकरणमन्त्रघटिततयाप्राय शोभगवदाराधकैः श्रीरङ्गादिदिव्यदेशेषुतत्तत्क र्मविनियोगायपारम्पर्येणाधीयते-यत्रैवच-द्वादशा दयश्चत्वारोमन्त्राः-सर्वस्यवशिनमित्यादिरूपाः- षोडशादयश्चत्वारोमन्त्राः-दक्षिणेतुभुजइत्यादिरू पाश्चपठ्यन्ते-तदेवब्रह्मसूक्तमाथर्वणिकमहोप निषदन्तभागस्थितमितिविज्ञायते॥५३॥इत्थञ्च- दक्षिणेतुभुजेविप्रइत्यादिरिवलमन्त्रआथर्वणिकम होपनिषदिब्रह्मसूक्तेषोडशोमन्त्रइतिसिद्धम्॥५४॥ अतएवपाद्मोत्तरखण्डेद्वितीयाध्याये-दक्षिणेतुभुजे विप्रोबिभृयाद्वैसुदर्शनम्-वामेतुशङ्खंबिभृयादितिब्र ह्मविदोविदुः। एवम्महोपनिषदिप्रोक्तचक्रादिधारणम् । तथैवसाम्नियजुषिऋक्विप्रोक्तंशुभानने-इत्यत्र-दक्षि णेत्वित्यादिरिवलमन्त्रमुदाहृत्यतस्यमहोपनिषदन्त र्गतत्वंस्पष्टमुक्त्वाउत्तरत्रसामादिवेदत्रयघटकप्रमा

णोपन्यासाय-तथैव-साम्नियजुषिऋचिप्रोक्तमिति
सामादिवेदत्रयनामवचनभङ्ग्यापूर्वोक्तमहोपनिषद आ
थर्वणिकत्वंज्ञाप्यते॥५५॥एवंकालोत्तरसंहितायांस्त
दर्शनसमाराधनाध्याये-एवंप्रासादशिखरेचक्रंसं
स्थापयेद्बुधः।द्वादशारमथाष्टारंषडरंवामहामते।सं
स्थाप्यविधिवत्पश्चात्कुम्भैर्द्वादशभिःक्रमात्।दक्षिणे
तुभुजेविप्रइतिक्षीरेणासेचयेत्-निर्विक्षेपस्कृषणामि
तिदध्नास्नापयेत्ततः।घृतेविष्णोइत्यनेनघृतेनह्यभि
षेचयेत्।एभिर्वयमुरुक्रमस्यमधुनास्नापयेद्बुधः।
धृतोर्ध्वपुण्ड्रःकृतचक्रेत्यैक्षवरसेनतु।पवित्रमित्यग्नि
रितिपञ्चगव्येनसेचयेदित्युक्तम्॥५६॥श्रीविष्णु
मन्दिरसंहितायामप्युक्तम्-प्रत्यङ्गिरंशिखाशीर्षं
ब्रह्मसूक्तंतथैवच।वैष्णवंपौरुषञ्चैवमन्यान्मङ्गलपा
ठकानिति-तथा-सूक्तन्तुपरमात्माख्यंवैष्णवंसूक्तमे
वच।अध्यापयेत्पौरुषञ्चध्रुवाद्यौरितिवाचयेदितिच
॥५७॥अत्रापिब्रह्मसूक्तपरमात्मसूक्तशब्दाभ्याम्म
होपनिषत्पठितमेकोनविंशतिमन्त्रात्मकंब्रह्मसूक्तमेव
परिगृहीतम्-शब्दतोर्थतश्चप्रत्यभिज्ञानात्॥५८॥

एवम्-पाद्मोत्तरखण्डे द्वितीयाध्यायेप्युक्तम् ॥ सर्वाश्रमे
षुवसतांब्राह्मणानांविशेषतः। विधिनावैष्णवंचक्रंधार्यं
हिश्रुतिचोदनात्। दक्षिणेतुभुजेविप्रोबिभृयाद्वैसुदर्शन
म्। वामेतुशंखंबिभृयादितिब्रह्मविदोविदुः। एवम्महोप
निषदिप्रोक्तंचक्रादिधारणम्। तथैवसाम्नियजुषिऋचि
प्रोक्तंशुभानने। प्रतद्विष्णो। अग्नेचक्रेपवित्रेजन्माम्भो
धिंततर्त्वेचर्षणीन्द्राः। मूलेबाह्वोर्दधतेन्येपुराणालिङ्गा
न्यङ्गेतावकान्यर्पयन्ति। चरणंपवित्रंविततम्पुराणंवाङ्म
यंशुभम्। तेनचक्रेणसन्तप्तास्तरेयुःपातकाम्बुधिम्-
पवित्रंब्राह्मणस्यत्यंजगद्धात्रंहरेस्सदा- तेनातप्ता
तनूर्येषांनतेयान्तिपरम्पदम्। तेनतप्तातनूर्येषांतेप्र
यान्तिपरंपदम्। पवित्रंचरणंनेमिःपविश्चक्रंसुदर्शन
म्। सहस्रारंप्राकृतनघ्नंलोकद्वारम्महौजसम्। नामा
निविष्णुचक्रस्यपर्यायेणनिबोधमा शङ्केनवह्नित
प्तेनब्रह्मतेनपुनीहिनः। यत्तेपवित्रमर्चिष्यग्नेविततमन्तरा तेनपुनी
हिनः। येनदेवाःपवित्रेणआत्मानंपुनतेसदा। तेनसह
स्रधारेणपावमान्यःपुनन्तुमा। प्राजापत्यंपवित्रन्तुश
तोद्यामंहिरण्मयम्। तेनब्रह्मविदोवयंपूतंब्रह्मपुनीम

हे। सनेमिचक्रमजरंचक्षुरस्यमहात्मनः। अस्मिन्हि
विधृतेदेवामहोन्नतपदंययुरिति॥ धृतोर्ध्वपुण्ड्रः
कृतचक्रधारीविष्णुंपरंध्यायतियोमहात्मा-स्वरे
णमन्त्रेणसदाहृदिस्थंपरात्परंयातिविशुद्धचेता
इति = इत्येवंश्रुतयस्सर्वाःकथयन्तिवरानने। तथै
वसेतिहासेषुपुराणेष्वपिकथ्यते। तस्माद्वेविधि
वद्धार्याश्शङ्खचक्रादिहेतयः। ब्राह्मणानांविशेषेण
वैष्णवानांविशेषतइतिच॥५१॥ हहारीतस्मृता
वप्युक्तम्। तृतीयाध्याये- पवित्रंवितंब्राह्मंप्रभो
र्गात्रेतुधारितम्। अस्येवचाङ्कयेन्नान्तेतद्ब्रह्मसमवा
सये। यत्तेपवित्रमर्चिष्मग्नेविततमन्तरा। ब्रह्मते
नपुनीमहेब्राह्मणश्श्रुतिसंहितम्। पवित्रमितिचैवा
ग्निरग्निर्वैचक्रमुच्यते। अग्निरेवसहस्रारस्सहस्रारो
नेमिरुच्यते। नेमितसतनूस्सूर्योब्रह्मणासमताव्रजे
त्। यत्तेपवित्रमर्चिष्ममग्नेतेनपुनीहिनः। दक्षिणेतु
भुजेविप्रोबिभृयाद्वैसुदर्शनम्। सव्येतुशङ्खंबिभृया
दितिब्रह्मविदोविदुः। इत्यादिश्रुतिभिःप्रोक्तंविष्णो
श्चक्रस्यधारणम्। पुराणेष्वितिहासेषुसात्त्विकेषु

स्मृतिष्वपीति ॥ ६० ॥ उदाहृतपञ्चरात्रसंहितास्मृ
तिपुराणवचनैस्सोदर्शनकर्मणि विनियुक्तानां प्राग्व्या
ख्यातानां खिलानामखिलानां च श्रुतीनां स्कदर्शनपरत्वं त
था खिलानां श्रुतित्वञ्चासन्दिग्धं सिध्यति ॥ ६१ ॥
यथा हि यज्ञोपवीतादि खिलमन्त्राणां कल्पसूत्र
कारविनियुक्तानां श्रुतित्वमसन्दिग्धं - तथैवासाम
पि खिलश्रुतीनामुदाहृतवचनेषु कर्मविशेषविनि
युक्तानां श्रुतित्वमसन्दिग्धमिति पठ्यमानप्रत्यक्ष
श्रुतीनामिवासामपि प्रत्यक्षश्रुतिवदेव पठ्यमानानां
तत्तच्चक्राद्यङ्कनादिषु निरवद्यप्रमाणत्वं दुरपह्नवम्
॥ ६२ ॥ एवमुदाहृतवचनानुपात्तविनियोगानाम्पार
म्पर्यतः पठ्यमानानां खिलश्रुत्यन्तराणामपि श्री
पञ्चरात्रसंहितास्मृतीतिहासपुराणादिषु तत्तत्त
त्रविनियोगो द्रष्टव्यः ॥ ६३ ॥ एवमासां खिलानाम
खिलानाञ्च श्रुतीनामविशेषेणानादिकालतः पार
म्पर्येण द्राविडादिदेशविशेषेषु शिष्टैः पठ्यमानानां
व्याख्यातृभिर्व्याख्यायमानानामविच्छिन्नशिष्टगो
ष्ठ्यनुष्ठानगोचरीभवत्स्वप्रतिपाद्यार्थानां यथोक्ता

र्थकत्वंवायथोक्तानुपूर्वीकत्वंवाश्रुतित्वंवायथोक्तवेदभागविशेषसम्बन्धित्वंवानकेनचिदास्तिकेनापलपितुं शक्यम् । अन्यथासम्प्रतिपन्नश्रुत्यन्तराणामपितत्तदर्थानुपूर्व्याद्यपलापप्रसङ्गस्यदुर्वारत्वात्॥ ॥६४॥ इदंपुनरत्रावधेयम्। वेदानांनिश्शङ्कप्रमाणतयाऽऽदरणीयत्वेतत्क्रमविच्छिन्नपाठसम्प्रदायानपलपनीयानुपूर्वीकत्वम्। तच्चोदाहृतानांखिलानामखिलानाञ्चश्रुतीनांसमानम्- अपरिज्ञायमानपूर्वोत्तरभागत्वलक्षणंखिलत्वंनश्रुतीनां प्रामाण्यस्वीकारबाधकंस्कवचम्। भागान्तरापरिज्ञानस्यभागान्तरप्रामाण्यज्ञानप्रतिरोधित्वाभावात् - तथासतिशाखान्तरापरिज्ञानस्यशाखान्तरप्रामाण्यस्वीकारबाधकतायाअवर्जनीयतया वेदेषु क्वापि शाखायांकस्याप्यसर्वज्ञस्य प्रामाण्यबुद्ध्युदयासम्भवेन वेदमात्राप्रामाण्यप्रसङ्गस्यदुर्वारत्वाच्च । तस्मात्सारम्पर्यतःपठ्यमानानामुदाहृतखिलश्रुतीनामनूचानपरम्परा

नुष्ठीयमानस्वार्थानामप्रामाण्यशङ्कागन्धानर्हतयात
दुक्तार्थोनिरपवादएवावतिष्ठते। एवमासांखिलश्रुती
नांपठितृपाठयितृपरम्परासिद्धवेदभेदभागभेदसम्ब
न्धित्वमपिचदुरपह्नवमिति॥६५॥ इत्यञ्चोदाहृत
श्रीपञ्चरात्रसंहितादिवचनेषुदर्शितखिलश्रुतीना
म्मध्येकासांचिद्वेदभागविशेषघटकत्वानिर्णयेपि
-निचिक्षेधस्कषणामितिखिलश्रुतेर्वेदविशेषघटक
त्वानिर्णयेपि- चक्रंबिभर्तीतिखिलश्रुतेरनुपादा
नेपिनक्षतिः- पठितृपाठयितृपरम्परयैवतत्सिद्धेः
-अतिमहतिशास्त्रौघेनानादेशवितततगवेषणेन
तदुपलम्भस्यापिसम्भवाच्च॥६६॥ अतएव-द्वार
काशङ्करमठपतिपरम्पराघटकेनाच्युताश्रमनाम्ना
रामनाममाहात्म्येपञ्चमप्रकरणे- चक्रंबिभर्तीतिश्रु
तिः किंचिद्भिन्नानुपूर्वीकायजुर्वेदभागभेदगतोदाहृ
ता= चक्रंबिभर्तिवपुषाभितसंबलंदेवानाममृतस्य
विष्णोः। सएतिनाकंदुरिताविधूयविशान्तियद्यतयो
वीतरागाइतियजुषीति॥६७॥ एवंसुदर्शनोप
निषदादिषुकाण्वशाखिनामाम्नायेचबह्व्यः श्रुतय

स्तत्सचक्राङ्कनपरास्सन्ति ॥ ६८ ॥ तास्सर्वाग्रन्थवि
स्तरभयादिहानुदाहृताबुभुत्सुभिस्तत्रतत्रद्रष्टव्याः
॥ ६९ ॥ आस्तिकानांनास्तिकजनकोलाहलेन- तप्त
चक्राङ्कनादिधर्मोवैदिकोनवेतिसञ्जातविप्रतिपत्ती
नामलमियदेवनिरूपणंविप्रतिपत्तिनिवारणइतिनिरू
पणबाहुल्याद्वयमुपरतास्स्मइत्यवधेयम् ॥ ७० ॥

इतिश्रीभगवद्धर्मदर्पणेतप्तचक्राङ्कनपरास्विलस्मृति
निरूपणंनामचतुर्थः परिच्छेदः ॥ ४ ॥ ॥ छ ॥

॥ श्रीः ॥

श्रीमतेरामानुजायनमः। श्रीमदनन्तार्यमहागुरवेनमः ॥

अथश्रीपञ्चरात्रस्मृतीतिहासपुराणादिगतप्रमाणैस्तप्तचक्राङ्कनविधानंनिरूप्यते ॥१॥ तत्रप्रथमंपञ्चरात्रसंहितावचनैस्तन्निरूप्यते ॥२॥ तत्रतावद्भरद्वाजसंहितायांन्यासोपदेशेतृतीयाध्याये ॥ ब्राह्मणः क्षत्रियोवैश्यश्शूद्रोनारीतथेतरः। चक्राद्यैरङ्कयेद्गात्रमात्मीयस्याखिलस्यच ॥ अनिष्टानांनिवृत्त्यर्थमैकान्त्यायजगत्पतेः ॥ सिद्ध्यर्थंकर्मणाञ्चैवधार्यंचक्रादिलाञ्छनम्। बाह्वोर्ललाटेशिरसिहृदयेचाग्रजन्मनाम् ॥ शङ्खचक्रगदाशार्ङ्गखड्गैर्मन्त्रेणदाहयेत्। विष्णोरायतनाग्नौवागुरोरात्मनएववा। हुतेहोमादिभिस्तैस्तैस्सुरूपैरर्चितैः क्रमात्। दासभूतंयदात्मानंबुध्येतपरमात्मनः। तदैवगात्रंकुर्वीतशङ्खचक्रादिलाञ्छितम्। अङ्कितः क्वचिदप्यङ्गेचक्रेणैकेनकेवलम्। अनिष्टानान्तुभूतानांनतावद्दृशगोभवेदित्युक्तम् ॥३॥ अत्रस्वाभाविकभगवद्दा

स्यलक्षणस्वरूपयाथात्म्यज्ञानसमनन्तरमविल
म्बितं ब्राह्मणादिभिरधिकारिभिस्तत्तच्चक्रादिला-
ञ्छनमवश्यं धार्यम् – तद्धारणेनच – सर्वपापनि
वृत्तिः ।भगवदनन्यभक्तत्वलक्षणैकान्त्यसिद्धिः।
शास्त्रीयसर्वकर्मणांयथावस्थितफलनिष्पादक-
त्वलक्षणा सिद्धिः – कदाचिदपियमकिंकरपि
शाचाद्यनिष्टभूतवश्यत्वासम्भवश्चेत्येतानिप्रयो
जनानिसम्भवन्तीतिस्पष्टमभिहितम् ।।४।।एवंत
त्रैव चतुर्थाध्याये – शङ्खचक्रोर्ध्वपुंड्रादिचिह्नैः
प्रियतमैर्हरेः । रहितस्सर्वधर्मेभ्यः प्रच्युतोनैनमा
प्नुयादितिवचनेन शङ्खचक्रादिलाञ्छनविरहि-
णां सर्वविधमोक्षोपायाधिकारप्रच्युत्याभगव-
त्प्रासिलक्षणमोक्षाभावं प्रतिपादयता मुमुक्षुसा
मान्यस्यचक्रादिलाञ्छनधारणंविनागतिरेव-
नास्तीत्युक्तं भवति।।५।।एवंतस्यामेवसंहितायां
परिशिष्टेद्वितीयाध्याये शङ्खचक्रादिलाञ्छनप्रभृ
तिपञ्चसंस्कारधारणाक्रम उक्तः – उपासितगु
रोर्वर्षं विष्णोर्दास्यमभीप्सतः । विहिताःपञ्चसं

स्कारायुक्तस्यानन्यचेतसः। तापः पुण्ड्रस्तथानामम
न्त्रोयागश्च पञ्चमः। अमीपरमसंस्काराः पारमैका
न्त्यहेतवः। तापयिष्यन्गुरुः शिष्यंचक्राद्यैर्हेतिभि
र्हरेः। पूर्वाह्णे नियतस्स्नात्वा स्नातं मन्त्रजलाप्लुतम्।
अन्वादक्षिणातःकुर्याद्वैष्णव्याबद्धकौतुकम्। तत
स्समर्चयेद्देवमर्चायां स्थंडिलेपिवा। पाञ्चिमेस्वेन
तन्त्रेणकृत्वाग्नेस्स्थापनादिकम्। मूलमन्त्रेणहु
त्वाज्यं ततः प्रत्यक्षराहुतीः। एकां पुनश्चसर्वेणपौ
रुषीभिश्चषोडश। हुत्वाग्निं विष्णुगायत्र्याहुत्वाचै
वाथहेतिभिः। हविर्निवेद्यदेवाय तच्छेषेणतदा
हुतीः। अथोपसन्नेहेमानितान्याणिरजतानिवा।
प्रक्षाल्यपञ्चगव्येनमन्त्रतोयाप्लुतानिच। बिम्बा
निवह्नोहेतीनांनिधायावाह्यमन्त्रतः। अर्घ्यपाद्यं
तथाचाममं गन्धंपुष्पंचधूपकम्। दीपंचदत्वाथाभ्य
र्च्यप्रणम्याग्निसमप्रभम्। आचार्यस्स्वयमादा-
यनियुक्तोवाथमन्त्रवित्। प्राङ्मुखस्योपविष्ट-
स्यन्यसेद्वाहौतुदक्षिणे। सुदर्शनंतथावामेपा
ञ्चजन्यं स्वमन्त्रतः। एवंगदांधनुःखड्गं ललाटेमू

र्ध्निवक्षसि । चक्रं वा शङ्ख चक्रे वा धारयेत्सर्वमेव वा । तन्त्रं समाप्य देवेशं सह शिष्यैः प्रदक्षिणम् । कृत्वा प्रणम्य सान्निध्यं प्रार्थ्य शेषं समापयेत् । कुर्यात्सर्वं च कर्मान्ते द्विजैः पुण्याहवाचनमित्यादिनाग्रन्थेन ॥६॥ तथा तत्रैव ध्याये पञ्च संस्कार धारणक्रम निरूपणानन्तरमुक्तम् । तापस्तपांसि तीर्थानि पुण्ड्रो नाम नमस्क्रिया । आम्नायास्सकला मन्त्राः क्रतवः पूजनं हरेरिति ॥७॥ अत्र तापसंस्कारस्य सर्वतपस्समुदाय समानस्कन्धत्वम् । पुंड्र संस्कारस्य सर्व पुण्य तीर्थस्नान समान स्कन्धत्वम् । नाम संस्कारस्य सर्वकाल कृत भगवन्नमस्कार समानस्कन्धत्वम् । मन्त्र संस्कारस्य सर्व वेदाध्ययन समानस्कन्धत्वम् । याग संस्कारस्य वैदिक सर्व क्रतु समान स्कन्धत्वञ्च प्रतिपाद्य । अमी परम संस्काराः पारमैकान्त्य हेतव इत्युपक्रमोक्तं पारमैकान्त्य हेतु तापादि संस्कार पञ्चकस्य वर्णनिबन्धन संस्कारान्तरापेक्षया परमत्वं विवृतम् ॥८॥ अन्यादृशसंस्कारेषु सत्यामपि किञ्चि

न्यूनतायामेभिस्संस्कारैस्सर्वन्यूनतापरिहारकै-
र्यथाविधिकृतैस्सर्वैरपिसम्पन्नस्यैवसर्वपापवि-
मोक्षलक्षणमोक्षप्रयोजकवैष्णवत्वसिद्धावर्ण-
सम्बन्धिसंस्कारसंस्कृतानामप्यत्यन्तमावश्य-
काश्चमीपञ्चसंस्काराः ॥९॥ तदिदमपितत्रैवो-
क्तम्। उदाहृतश्लोकात्पूर्वेण = एकदेशयुतोप्य-
न्यसंस्काराणांगुणान्वितः। युक्तःपरमसंस्कारै-
स्सर्वैर्भागवतस्स्मृत इतिश्लोकेन ॥१०॥ यत्तेपवि-
त्रमर्चिषि— अग्नेविततमन्तरा— ब्रह्मतेनपुनी-
महे। उभाभ्यांदेवसवितः। पवित्रेणसवेनच— इदं
ब्रह्मपुनीमहे— इतिपवमानसूक्तश्रुत्यापिपञ्चा-
नांसंस्काराणामावश्यकत्वंज्ञाप्यते ॥११॥ अत्र= य-
त्तेपवित्रमर्चिषीत्यादिना। ब्रह्मतेनपुनीमह इत्यन्ते-
नतप्तचक्राङ्कनलक्षणंतापसंस्कारंप्रस्तुत्यतावन्मा-
त्रेणाचारितार्थ्यात्ततउपरि— पवित्रेणेतितापसं-
स्कारमादिमम्। सवेनेतियागसंस्कारमन्तिमञ्चो-
भौकण्ठतस्सङ्गृह्यसंस्कारपञ्चकंक्रोडीकृत्या-
भिधाय— चकारेणानुक्तसमुच्चायकेनपुण्ड्रना-

ममन्त्रसंस्कारानुपलृंह णासिद्धानन्यांस्त्रीनपिसङ्गृ
ह्य—इदंब्रह्मपुनीमहे इतियथोक्तसंस्कारपञ्चक-
निबन्धनं शरीरस्यसंशोधनंहिप्रार्थ्यते॥१२॥प्रा-
जापत्यंपवित्रम्—शतोद्यामं हिरण्मयम्—
तेनब्रह्मविदोवयम्। पूतंब्रह्मपुनीमहे। इतिपव-
मानसूक्तश्रुत्याम्— ब्रह्मविदः। मोक्षार्थंब्रह्मोपा-
सनप्रवृत्ताः। वयम्—पूतम्— वर्णाश्रमसम्बन्धि-
सर्वसंस्कारसंस्कृतम् ब्रह्म—शरीरम्। तेन—प-
वित्रेण—पुनीमहे—पावयामहे—इतिसंस्का-
रान्तरसंस्कृतस्यापि शरीरस्यपवित्रशब्दोपलक्षि
तेन यथोक्तसंस्कारपञ्चकेनपावनीयताहि मुमु
क्ष्वधिकार्यपेक्षिताप्रतिपाद्यते॥१३॥ उक्तपव
मानसूक्तश्रुत्योस्सुदर्शनपरत्वं तन्नत्यब्रह्मश-
ब्दस्यशरीरपरत्वञ्च प्रागेवोपपादितम्॥१४॥पा
द्मसंहितायां-चर्यापादे त्रयोविंशाध्यायेप्युक्तम्।
पद्माक्षमालांग्रीवायां लम्बयेत्साधकश्शुचिः।
हारे हेममयं-चक्रं सर्वविघ्नोपशान्तये। जपकालेत
था-चक्रशङ्खाकृतियथातथा—शार्ङ्गखड्गगदाकारं

लाञ्छनं लाञ्छयेत्सुधीः। शिरस्यवयवे बाह्वोर्वक्षो भुविचतुर्मुख ॥ चक्रादिपञ्चाभिज्ञानलक्षिताङ्ग परिष्कृतम्। पुरुषंदूरतोदृष्ट्वा भूताद्या भयविह्वलाः। विद्रवन्तितथाघोराः पापावीक्षणमात्रतः। विनश्यन्तितथापुण्यपुञ्जानिप्रविशन्तिच। प्रणमन्तितथादेवादेवर्षिप्रवरास्तथा। अकृत्यमपि कुर्वाणोभुञ्जानोवायतस्ततः। पापेर्नलिप्यते देही चक्राद्यायुधलाञ्छितः। हव्यंकव्यंचदातव्यंतस्मैदातव्यमक्षरमिति ॥१५॥ अत्रविवरणमित्थंबोद्धव्यम्। शुचिः—स्नानादिना प्रयतः। साधकः—उपासकःपुरुषः। जपकाले—ग्रीवायाम्—पद्माक्षमालाम्। तथा—सर्वविघ्नोपशान्तये—हेममयंचक्रं हारेच—लम्बयेत्—अवस्रंसयेत्—धारयेदितियावत्—जपकाले ग्रीवायांपद्माक्षमालाधारणं—हारेहेममयचक्रधारणञ्चकर्मसाद्गुण्यार्थंविघ्नशान्त्यर्थञ्चकर्तव्यमित्याशयः। एवंपद्माक्षमालासाहचर्येणकालविशेषेहारघटकतयाभूषणरूपेणहेममयञ्च

क्र धारण मात्रं पुष्कलानुष्ठान सिद्धये न पर्याप्तम्
अपितु-चिह्नरूपेणापि सदा पञ्चायुधानि धार्याणी
त्याशयेनाह। तथेत्यादिना-तथा-हे चतुर्मुख-च
क्रशङ्खाकृति शार्ङ्ग खड्ग गदाकारं च यथास्यात्तथा-
लाञ्छनं च सुधीः बाह्वोः-शिरस्यवयवे-शिरोरूपा
वयवे- वक्षोभुवि-वक्षःस्थले च-लाञ्छयेत्-अ
ग्निसंयुक्ततत्संयोग जन्याङ्कन द्वारा सदैव पञ्चायुधा
न्युक्तस्थानेषु धारयेदिति श्रुतिपञ्चरात्रसंहितान्तर
स्मृत्यन्तरैकवाक्य सिद्धः फलितोर्थः। अन्यत्सर्वं
स्फुटमिति ॥१६॥ अत्रग्रीवायां पद्माक्षमालादि धार
णवत्कादाचित्कहेममय-चक्रधारणपार्थक्येन विधा
य बाह्वादिस्थानेषु सार्वकालिक चक्रादि धारणस्य
पृथग्विधानात्-दक्षिणे भुजे विप्रइत्यादि श्रुतीनां बा
ह्वादिस्थानेषु चक्रादिधारणविधायिनीनां भूषणादि
रूपेण चक्रादि धारणपरत्वमात्रमाश्रित्य चक्राङ्कन
परत्वापलपनं केषांचिदयुक्तमिति सिद्धं भवति॥१७॥
विष्णुमन्दिरसंहितायां प्रतिष्ठाध्याय उक्तम्। प्रतिष्ठा
दिवसंज्ञात्वाग्रे त्रिभिर्द्विजसत्तमैः। एकान्तिमुनिमुख्यैस्तु

कृतचक्रादिलक्षणैः। यजमानः प्रकुर्वीत वेद्यादिस्थापनं पुर इति॥१८॥ अत्र चक्रादिचिह्नधारणानिबन्धनपारमैकान्त्यभाजामत एव मुनिमुख्यतामापन्नानां द्विजसत्तमानामेव भगवत्प्रतिष्ठार्चनाद्याधिकारप्रतिपादनादङ्गभूतभगवत्प्रतिष्ठार्चनादिकं विना मोक्षौपयिकभगवद्भक्तिस्वरूपानिष्पत्त्या मुमुक्षूणां चक्रादिलाञ्छनमवश्यं धार्यमित्युक्तं भवति॥१९॥

पारमेश्वरसंहितायामपि प्रतिष्ठाध्याय उक्तम्॥
एवं तदीया विप्राश्च क्षत्रिया वैश्यजातयः। मौद्गल्याद्यास्तथान्ये च नतच्चिह्नविवर्जिताः। भवेयुस्सर्वदा तस्माच्छङ्खचक्रगदाम्बुजैः। लौहैरनलसन्तप्तैस्तत्तन्मन्त्राधिवासितैः। पूजितैरर्घ्यगन्धाद्यैरङ्कितव्याः क्षणेन तु। अत्यन्तज्ञानसंपन्नाय थोक्ताचारनिष्ठिताः। विप्राद्यास्ते च शूद्राश्च यदेवं कृतलक्षणाः। तदा तु योग्या विज्ञेयास्समयश्रवणादिषु। शास्त्रोदितासु सर्वासु सामग्रीषु महामते। यागोपकरणान्येव मर्घ्यपाद्यादिकान्यपि। संलाञ्छ्य नियथायोगं शङ्खचक्रादिलक्षणैः। तथा

यानासनादीनि विभोस्सर्वाणि यत्नतः। स्वात्मोपकरणं सर्वमासनादि विवर्जितम्। अङ्गुलीयकपर्यन्तं सर्वमुष्णीषपूर्वकम्। चक्रादि लाञ्छितं कुर्यात्तदीयाश्च गवादयः। विप्रादिवल्लाञ्छितव्यास्तदीया भूरुहादयः। लाञ्छितव्या यथायोगं चक्रशङ्खादि लक्षणैः। आधारकाद्याः कर्मण्या एवं चक्रादि लाञ्छिताः। देवतान्तर चिह्नैस्तु अकर्मण्यास्तु लाञ्छिता इति ॥२०॥ एवं श्री विष्णु तत्वेपि तृतीयपादे प्रथमे पटल उक्तम्। एवं विज्ञापिताश्शिष्याश्च क्र लिङ्ग समन्विताः। देवा एव भवंत्येते नान्येषां कर्मकारका इति। द्वितीयपटले। इति तेनाभ्यनुज्ञातश्चक्रालिङ्ग धरो भवेदिति॥ नवमे पटले—संस्कारव्यञ्जितात्मानः पतिचिह्नेन लाञ्छिताः। देवाभिधान वन्तश्च त्यक्तास्पद परिग्रहाः। तमेव सर्वभावेन सम्श्रयान्तु महासुन इति च अंतिमे पटलेपि—चक्रादि धारणं पुंसां परसम्बन्धवेदनम्। पतिव्रता निमित्तं हि वलयादि विभूषणमिति च॥२१॥ अत्र पत्न्याः पत्यनन्यार्हशेषत्व व्यञ्जक चिह्नभूतं

वलयादि विभूषणं यथावश्यापेक्षितं भवति। तथा चेतनानां भगवदनन्यार्हशेषत्वाभिव्यंजकचक्रादि धारणमवश्यापेक्षितमिति — चक्रादि चिह्नधारिणां तद्धारणतोऽभिव्यक्तजन्मान्तरसहस्रसञ्चितपरमतपःफलरजस्तमोभिहतिपूर्वकशुद्धसत्वगुणातिरेकप्रस्फुटप्रतिभासमानस्वाभाविकभगवद्दास्याभ्युपगमानां भगवदाज्ञानुवर्तनशीलानान्देवसञ्ज्ञाव्यपदेश्यत्वं भगवदनन्ययाजित्वंच भवतीति च स्पष्टमुक्तम् ॥२२॥ उक्तरीत्यादेवसंज्ञाभाजांभगवदनन्ययाजित्वं — भगवदनन्ययजनलक्षणधर्माणामेवञ्च प्रथमधर्मत्वम् — उक्तरीत्यालब्धदेवसञ्ज्ञानां भगवदनन्ययाजिनामेवसूरिपरिषदुपलक्षितपरमपदलक्षणनाकविशेषगामित्वञ्च श्रुतिरपिस्पष्टमाह। यज्ञेनयज्ञमयजन्तदेवाः। तानि धर्माणिप्रथमान्यासन्। तेहनाकं महिमानस्सचन्ते। यत्रपूर्वेसाध्यास्सन्तिदेवाइति ॥२३॥ अत्र यज्ञमयजन्तेत्यत्र यज्ञशब्दोभगवत्परः। यज्ञोवैविष्णुरितिश्रुतेः। अतः — यज्ञमयजन्तेति भगवदनन्यया-

जित्वमभिधीयते। देवशब्दश्चोदाहृतसंहितावचनोक्तरीत्यादेवसंज्ञाभागिपरः। पूर्वेदेवाइतिच नित्यसूरिपरः। यत्रर्षयः प्रथमजाये पुराणाइति श्रुत्यन्तरैकार्थ्यादिति बोध्यम् ॥२४॥ एवं पवमानसूक्ते-पुनन्तुमादेवजनाइत्यत्र-येनदेवाःपवित्रेण-आत्मानंपुनतेसदेत्यत्र च देवशब्दः उदाहृतसंहितोक्तरीत्यादेवसंज्ञाभाजश्चक्राङ्कितभगवद्भक्ताग्रेसरानेवाचष्टे-पवित्रेणात्मानं सदापुनतइति तेषांचक्राङ्कितत्वस्य तत्रैव प्रकरणेस्पष्टं श्रवणात् ॥२५॥ तदैककण्ठ्यादपिच-यज्ञेनयज्ञमयजन्तदेवाइत्यत्र देवशब्दस्तत्परो भवितुमर्हति ॥२६॥ ईदृशभगवद्भक्ताग्रेसराणां पावनत्वातिशयादेवच स्नानमार्जनादौ शुद्धिविशेषहेतुभूते कर्मणि करणतयाविनियुक्ते पवमानसूक्ते पुनन्तुमादेवजनाइतिशुद्धिप्रदानार्थं तत्प्रार्थनं क्रियते ॥२७॥ अतएवेदृशभगवद्भक्ताग्रेसराणां परमपावनत्वमुक्तम्-पाद्मोत्तरखंडे द्वितीयाध्याये— येकण्ठलग्नतुलसीनलिनाक्षमालायेबाहुमूलपरिचिह्नितशङ्खचक्राः। येवा

ललाटफलकेलसदूर्ध्वपुंड्रास्तेवैष्णवाभुवनमाशु
पवित्रयन्तिइति ॥२८॥ बृहद्धारीतस्मृतावपि द्विती
याध्याये। व्यतिरेकमुखेनयथोक्तलक्षणभगवद्भ
क्तानांसुराणांदेवसञ्ज्ञाव्यपदेश्यत्वं व्यक्तमुक्तम्।
तस्माच्चक्रं विधानेन तप्तंवै धारयेद्द्विजः। सर्वाश्रमेषु
वसतांस्त्रीणांच श्रुतिचोदनात्। अनायुधासो अ
सुराअदेवाइतिवैश्रुतिरितिवचनेन श्रुतिविशेषमु
पबृंहयता ॥२९॥ अत्रहि यथोक्तलक्षणभागवताग्र
सराएवदेवशब्दवाच्याः। विपरीताश्चासुराइतिस्प
ष्टमुक्तं भवति — एतद्वचनोदाहृतश्रुतौ — अना
युधत्वस्यशङ्खचक्राद्यङ्कनराहित्यलक्षणस्यैव—
असुराअदेवाइत्युक्तासुरत्वादेवत्वप्रयोजकत्वा
भिधानात्। व्यतिरेकतोदेवसञ्ज्ञासिद्धेः ॥३०॥
श्रीगीताशास्त्रेपि। मोघाशामोघकर्माणो मोघज्ञा
ना विचेतसः। राक्षसीमासुरीञ्चैवप्रकृतिंमोहि
नींश्रिताः। महात्मानस्तु मांपार्थदैवींप्रकृतिमाश्रि
ताः। भजन्त्यनन्य मनसोज्ञात्वाभूतादिमव्ययमि
ति नवमाध्यायवचनयोः — अभयंसत्वसंशुद्धि

ज्ञानयोगव्यवस्थितिरित्यारभ्य प्रवृत्ते षोडशाध्याये ग्रन्थे। भवन्तिसम्पदं दैवीमभिजातस्य भारत। दम्भोदर्पोतिमानश्चक्रोधः पारुष्यमेवच। अज्ञानंचाभिजातस्यपार्थसम्पदमासुरीम्। दैवीसम्पद्विमोक्षाय निबन्धायासुरीमता। माशुचस्सम्पदं दैवीमभिजातोसिपाण्डव। द्वौभूतसर्गौलोकेस्मिन्दैव आसुरएवच। दैवो विस्तरशः प्रोक्त आसुरं पार्थमे शृणु। प्रवृत्तिंचनिवृत्तिंच जनानविदुरासुराः। नशौचंनापिचाचारो नसत्यंतेषु विद्यतइतिवचनेषु — तानहंद्विषतः क्रूरान् संसारे षुनराधमान्। क्षिपाम्यजस्रमशुभानासुरीष्वेवयोनिषु। आसुरींयोनिमापन्नामूढाजन्मनिजन्मनि। मामप्राप्यैवकौन्तेय ततोयान्त्यधमांगतिमितिवचनयोश्च- यदीयप्रकृतेर्निश्श्रेयसहेतुत्वं — यदीयप्रकृतेरधमगतिहेतुत्वंचाभिधीयते — देवासुरादिशब्दनिर्दिष्टास्तउभयेपियथोक्तलक्षणभागवताप्रेसरतद्विपरीतलक्षणप्राणिरूपा एवेति स्वरसतएवावगम्यते — अनन्यमनसइत्यादिपदैर्दैवशब्द

निर्दिष्टाधिकारिणांभगवन्नारायणैकभक्तत्वलक्षण
पारमैकान्त्यस्य तत्रैवाभिधानात्। तापःपुण्ड्रस्तथा
नाम मन्त्रोयागश्च पञ्चमः। अमी परमसंस्काराः
पारमैकान्त्यहेतवइत्यादिभिश्शास्त्रैस्तापादिपञ्च
संस्कारलक्षणवैष्णवदीक्षाग्रहणस्यैव तद्धेतुता-
याअभिधानात्। ईदृशवैष्णवदीक्षाविशेषग्रहणा
दुत्तरकालएवानन्ययाजित्वलक्षणस्याचारस्य शा
स्त्रतो लोकतश्च सिद्धत्वात् — यथोक्तलक्षणभाग
वताग्रेसरेभ्यो विपरीतलक्षणानामेवासुरादिश-
ब्देनात्र निर्दिष्टत्वाच्च ॥३१॥ देवशब्दरूढिप्रवृत्ति
निमित्तभूतो धर्मश्च भगवन्नारायणाज्ञानुवर्तनैक
शीलत्वम् ॥३२॥ असुरादिपदप्रवृत्तिनिमित्तभू
तो धर्मश्च तदाज्ञानिवृत्त्येकशीलत्वम् ॥३३॥ अत
एवोक्तम् भगवता भाष्यकारेण गीताभाष्ये — भवन्ति
सम्पदं दैवीमभिजातस्य भारते त्यस्य व्याख्याने-
देवसम्बन्धिनी सम्पत् दैवी — देवा भगवदाज्ञानुवृ
त्तिशीलाः। तेषां सम्पत् — सा च भगवदाज्ञानुवृत्ति
रेवेति — अज्ञानं चाभिजातस्य पार्थ सम्पदमासुरी

मित्यस्यव्याख्याने— असुरा भगवदाज्ञातिवृत्ति शीलाइतिच ॥३४॥ सर्वत्रेदृश प्रवृत्ति निमित्तेनैव चदेवासुरादिशब्दप्रयोगः ॥३५॥ ईदृशदेवशब्द प्रवृत्ति निमित्तन्तु— यत्रपूर्वे साध्यास्सन्तिदेवाः। यत्रर्षयः प्रथमजाये पुराणाः। इत्यादिश्रुतिप्रसिद्धेषु अनन्त गरुड विष्वक्सेनादि नित्यसूरिषु— आविर्भूतस्वरूपेषु मुक्तेषु — जन्मान्तर सहस्रसञ्चित तपो विशेष फलीभूत सत्त्वगुणातिरेकावगतस्वाभाविक भगवद्दास्याभ्युपगमपूर्वकं तदभिव्यञ्जक तप्तसुदर्शनादि भगवल्लाञ्छन धारणादि लक्षणावैष्णवदीक्षांप्राप्ययावदात्मभाविभगवत्कैङ्कर्यैक बद्धदीक्षेषुपरमैकान्तिसाञ्ज्ञितेषु मुमुक्षुषुन्च पुष्कलं — अन्यत्रापिन्च यथासम्भवं तदनुवर्तनादेवशब्दः प्रवर्तते ॥ यथोक्तासुरादिशब्द प्रवृत्तिनिमित्तंतु मधुकैटभ हिरण्यकशिपु हिरण्याक्षप्रभृति प्रसिद्धासुरजातीयेषु पुष्कलं — अन्यत्रापिच यथासम्भवं तदनुवर्तनादेवासुरादिशब्दः प्रवर्तत इतिबोध्यम् ॥३६॥ इत्थंयथो

क्तपरमैकान्तिलक्षणमुमुक्षूणांदेवशब्दवाच्यत्वा
देवच्चतद्गन्तव्यमार्गत्वाभिप्रायेण मोक्षगाम्यसा
धारणापुनरावृत्तिलक्षणार्च्चिरादिमार्गस्यदेवया
नसञ्ज्ञाश्रूयते ॥३७॥ श्रूयतेहिछान्दोग्योपनि
षदिपञ्चमप्रपाठके दशमखण्डे — तद्यइत्थंवि
दुर्येचेमेरण्येश्रद्धातपइत्युपासतेतेऽर्च्चिषमभिस
म्भवन्तीत्यारभ्य — तत्पुरुषोऽमानवस्सएनान्
ब्रह्मगमयत्येषदेवयानः पन्थाइतीत्यन्तम् — च
तुर्थप्रपाठकेपञ्चदशेखण्डेपि — अथयदुचैवास्मि
ञ्छव्यंकुर्वन्तियदिचनार्च्चिषमेवाभिसम्भवन्ती-
त्यारभ्य — तत्पुरुषोऽमानवस्सएनांब्रह्मगमय
त्येषदेवपथोब्रह्मपथएतेनप्रतिपद्यमानाइमम्मानव
मावर्तंनावर्तन्ते नावर्तन्तइत्यन्तंच ॥३८॥ कौषी
तकिब्राह्मणोपनिषदिप्रथमाध्यायेप्युक्तम् —
सएतंदेवयानंपन्थानमापद्याग्निलोकमागच्छ-
तिसवायुलोकंसवरुणलोकंसइन्द्रलोकंसप्रजा
पतिलोकंसब्रह्मलोकमिति ॥३९॥ इदमत्रबोद्ध
व्यम् । देवाः — यथोक्तलक्षणभागवताग्रेसराः —

यान्तियेनयस्मिन्वासदेवयानःपन्थाइत्युच्यते— करणाधिकरणयोश्चेत्यनुशासनेन— याप्रापणे इत्यस्माद्धातोः करणल्युडन्तोवाऽधिकरणल्युडन्तोवानिष्पन्नोयंयानशब्दः— देवपथोब्रह्मपथइत्यत्रापि— देवानामुक्तलक्षणभागवताग्रेसराणांपन्थाः देवपथइतिगन्तृसम्बन्धप्रधानासञ्ज्ञेयम्— ब्रह्मणः पन्थाः ब्रह्मपथइतिगन्तव्यसम्बन्धप्रधानेयंसञ्ज्ञा— आभ्यामुभाभ्यांसञ्ज्ञाभ्यामस्मिन्मार्गेगन्तारइमइति—गन्तॄणांप्राप्यमिदमितिच व्यक्तमुक्तंभवति—एनान्ब्रह्मगमयतीत्यत्रोक्तमेनानित्यंशमालम्ब्यप्रवृत्तादेवयानादिसञ्ज्ञा—ब्रह्मेत्यंशमालम्ब्यप्रवृत्ताब्रह्मपथसञ्ज्ञाचेत्युभयमेवदेवपथोब्रह्मपथइत्युत्तरत्रनिर्दिष्टमितिप्रकरणादेवस्फुटम्— यत्तु— शङ्करकृतं— देवैरर्चिरादिभिर्गमयितृत्वेनाधिकृतैरुपलक्षितःपन्थादेवपथ उच्यतइतिव्याख्यानम्—तदयुक्तम्—देवयानदेवपथादिशब्दघटकदेवशब्दस्यातिवाहिकदेवपरत्वेपि तृयाणसञ्ज्ञितधूमादिमार्गव्यावृत्त्यसिद्धेः—पितृ

याणेपि धूमाद्यभिमानिनां देवानामेवातिवाहिकत्वा
त— यद्यप्यर्च्चिराद्यभिमानिनो देवा आतिवाहि
का देवयाने— धूमाद्यभिमानिनो देवा आतिवाहि
काः पितृयाण इति भेदो वर्त्तत एव— तथाप्यर्च्चि
राद्यभिमानिदेवानां सामान्यतो देवत्वरूपेणैव दे
वपथ देवयानादि शब्दार्थ घटकत्वेन तत्तदसाधार
णरूपेण घटकत्वाभावात्तादृश शब्द प्रतिपाद्यता
वच्छेदकं देवोपलक्षित मार्गत्वं न पितृयाण व्याव
र्तकं भवितु मर्हति— किंच— बृहदारण्यको
पनिषदष्टमाध्याये द्वितीय ब्राह्मणे द्वितीयखण्डि
कायाम्— वेत्थो देवयानस्य वा पथः प्रतिपदं पि
तृयाणस्य वा यत्कृत्वा देवयानं वा पन्थानं प्रतिप
द्यन्ते पितृयाणं वापि हि न ऋषेर्वचः श्रुतमिति दे
वयान पितृयाण साञ्ज्ञित म्मार्ग द्वयं प्रस्तुत्योपन्य
स्ते तादृश सञ्ज्ञा द्वय विवरणरूपे मार्ग द्वय परे—
द्वे सृती अशृणवं पितृणा महं देवाना मुत मर्त्याना
म्। ताभ्या मिदं विश्वमेजत्समेति यदन्तरा पितर
म्मातरञ्चेति मन्त्रे— देवसाञ्ज्ञितानां पितृसाञ्ज्ञि

तानांच मर्त्यानांसम्बन्धिन्यौ द्वे सृती अशृणवमि
त्युक्त्या देवसाञ्ज्ञितगन्तृमर्त्यसम्बन्धिमार्गत्वं दे
वयानसञ्ज्ञाप्रवृत्तिनिमित्तम् — पितृसाञ्ज्ञितग
न्तृमर्त्यसम्बन्धिमार्गत्वं पितृयाणसञ्ज्ञाप्रवृत्ति
निमित्तमितिस्पष्टमेवोक्तम् दृश्यते— धूमादिमार्गगामि
नां पितृलोके पितृभावस्यैवप्राप्यत्वात्तदौपयिक
पुण्यपरिपाकतो धूमादिमार्गप्रवेशतः प्रागिहै
वतदंशस्याविर्भूतत्वाच्च पितृसञ्ज्ञयाव्यपदेशः।
यथाच मुमुक्षूणां देवयानसाञ्ज्ञितार्चिरादिमार्ग
गामिनां परमैकान्तिनां वैष्णवपरमपदे भगव—
न्नारायणानुवर्तनैकशीलत्वलक्षणकैङ्कर्यसा-
म्राज्यस्यैवप्राप्यतया देवशब्दप्रवृत्तिनिमित्तभू
तस्य तस्य भगवद्धर्मदीक्षाग्रहणसमनन्तरमत्रै
वाङ्कुरितत्वेन तेषामिहैवदेवसञ्ज्ञाव्यपदेश्यत्वं-
तथैवपुण्यकर्मणां पितृयाणसाञ्ज्ञितधूमादिमार्ग
गामिनामपि पुण्यकर्मपरिपाकवशात्पितृशब्द
प्रवृत्तिनिमित्तभूतपितृभावस्यात्रैवाङ्कुरितत्वस
म्भवेन तेषामपीहैवपितृसञ्ज्ञाव्यपदेशौत्वंसम्भव

ति — लोकविशेषगमनानन्तरमेवपितृशब्दप्रवृ
त्तिनिमित्तपौष्कल्यसम्भवेपितदेकदेशादपीहैव
तत्सम्भवितुमर्हति — समुदायेषुचवृत्ताश्शब्दा-
अवयवेष्वपिवर्तन्तइतिमहाभाष्येपतञ्जल्युक्त
न्यायात् = अतएवहि — तपश्श्रुतंचयोनिश्चे
त्येतद्ब्राह्मणकारकमितिनञ्सूत्रमहाभाष्योक्त
ब्राह्मणपदप्रवृत्तिनिमित्तघटकयोन्यतिरिक्तां
शासत्वेपिसंस्कारहीनब्राह्मणबालकस्य = अ
ष्टवर्षंब्राह्मणमुपनयीतेत्यादिश्रुत्यादिषुब्राह्मण
शब्देनव्यपदेशः — अथवाप्रवृत्तिनिमित्तस्य
प्रत्यासन्नतयानिश्चितत्वे तदैवतैस्तैश्शब्दै
स्तेते धर्मिणोनिर्दिश्यन्ते = तन्न्यायेनापि-
निश्चितप्रत्यासन्नपितृभावानांधूमादिमार्गगा
मिनांपितृसञ्ज्ञयाव्यपदेशस्सङ्गच्छते = प्र
सिद्धोहिलोकेवाग्दानादिनानिश्चितप्रत्यास
न्नदाम्पत्ययोःकन्यावरयोर्भार्याभर्तृशब्दाभ्यांव्यप
देशः। = स्मरतिचभगवान्पाणिनिरिममेवन्यायमनु
सृत्य — वर्तमानसामीप्येवर्तमानवद्वा - ३ - ३ - १३१ -

इति ॥ इत्थं च पितृशब्दः पुष्कलप्रवृत्तिनिमित्तपुरस्कारेणापि धूमादिमार्गगामिनोभिधातुं क्षमते — नन्वेतेषुतादृशप्रवृत्तिनिमित्तस्य पश्चात्सम्भवेपि तदानीमसत्त्वेन तदानीं तेषु तादृशशब्दस्य कथमबाधिताप्रवृत्तिस्सम्भवतीति वाच्यम् तदानीं तेषु तादृशप्रवृत्तिनिमित्तस्यासत्त्वेपि सन्निकृष्टकाले सत्त्वेन तदुपलक्षितत्वानपायात्तच्छब्दप्रवृत्तौ बाधकाभावात् — नहि शब्दप्रयोगसमकालं प्रवृत्तिनिमित्तासम्भवमात्रेण शब्दप्रवृत्तिर्व्याहन्यते — सन्निकृष्टपूर्वोत्तरकाले तत्सम्भवेपि शब्दप्रवृत्तिदर्शनात् — सन्निकृष्टपूर्वोत्तरकालप्रवृत्तिनिमित्तदर्शनमात्रेणापि च खलु — देवदत्तः परमकारुणिकः । यज्ञदत्तः परमक्रोधीत्यादयो व्यपदेशाः प्रवर्तन्ते — न खल्वेते नियमतश्शब्दप्रयोगसमकालं करुणां क्रोधं वा कुर्वाणमेव विषयीकुर्वन्ति — वस्तुतस्तु — वक्ष्यमाणरीत्या देवयानशब्दघटकदेवशब्दो यथायोगशक्त्या मुमुक्षुविषयस्सन्सकलेतरव्यावृत्तो भवति - तथैव पितृयाणशब्दघटकपितृशब्दोपि — पुण्यकर्मविशेष

साध्यैश्वर्यलक्षणभोगेच्छुसर्वाधिकारिसाधारण
स्तदितरसकलव्यावृत्तो व्यवस्थापनीयः। — अथ
यइमे ग्रामइष्टापूर्ते दत्तमित्युपासते ते धूममभिस
म्भवन्तीति च्छान्दोग्यपञ्चमप्रपाठकदशमख
ण्डगतश्रुत्या — अथ ये यज्ञेन दानेन तपसा लोका
न्जयन्ति ते धूममभिसम्भवन्तीति बृहदारण्यका
ष्टमाध्याय द्वितीयब्राह्मणगतश्रुत्या — येवैके चा
स्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ती
ति — एतद्वै स्वर्गस्य लोकस्य द्वारं यश्चन्द्रमा इति च
कौषीतकिब्राह्मणोपनिषत्प्रथमाध्यायगतश्रुत्या च —
यज्ञदानादिनानाविधपुण्यकर्मकारिणां तत्साध्य
सत्यलोकान्तप्रकृतिमण्डलान्तःपातिलोकानुभा
व्यैश्वर्यलक्षणभोगार्थिनां सर्वेषामेवाधिकारिणां
धूमादिमार्गेण स्वर्गशब्दितसर्वभोगैश्वर्यालयद्वा
रभूतं चन्द्रमसं गत्वैव स्वस्वकर्मसाध्यतत्तद्भोगैश्व
र्यानुभवार्थं यथायथं तत्तल्लोकगामितायाअवगमने
न — तेषां सर्वेषां पितृशब्देनेह विवक्षितत्वावगमा
त् — तस्मादिह पितृयाणशब्दघटकपितृशब्दो

धूमादिमार्गगामिभोगैश्वर्यार्थिसर्वाधिकारिसाधार
णेतरव्यावृत्तकिञ्चिद्रूपावच्छिन्नपरोवाच्यः —
तादृशंचरूपंभोगैश्वर्यभोक्तृत्वं — पितृशब्दोहि=
न सृनेष्टृ त्वष्टृहो तृपोतृभ्रातृजामातृमातृपितृदुहि
तृ — इत्युणादिद्वितीयपादसूत्रनिपातनेन — पा
पानइत्यस्माद्वा — पारक्षणइत्यस्माद्वाधातोस्तृ
न्नन्तस्तृजन्तोवानिष्पन्नः — तत्रपानार्थकधातु
निष्पन्नस्यतृजन्तस्येहविवक्षणेभोगैश्वर्यभोक्तृत्व
पर्यवसन्नंपानकर्तृत्वमिहप्रवृत्तिनिमित्तम्भवितु
मर्हति — ततश्चपानकर्तृत्वस्यपानानुकूलव्यापा
रवत्त्वरूपतयातत्तल्लोकविशेषानुभाव्यभोगैश्व
र्यानुभवलक्षणपानानुकूलनानाविधपुण्यकर्मका
रिणोमुमुक्षुप्रतिकोटिभूताबुभुक्षुशब्दिताऐश्व
र्यार्थिनएवेहपितृशब्देनविवक्षिताभवन्ति — तथा
चनिरुक्तभोगलक्षणपानानुकूलव्यापारवत्त्वंपु
ण्यकर्मकारित्वपर्यवसन्नमेवेहपितृशब्दप्रवृत्ति
निमित्तं — वस्वादिविषयपितृशब्दप्रवृत्तिनिमि
त्तन्तु — पिबन्तिपान्तिचेतिपितरइतिधातुद्वय

निष्पन्नहि विधव्युत्पत्त्यातत्तत्कव्य भोक्तृत्वसहि
तं तत्तत्कव्य दातृदेवदत्तादीनां तज्जनकादीनांच
तत्तद्देशकालानुगुणेष्टप्रापकत्वलक्षणंरक्षक
त्वम् = वसुरुद्रादितिसुताः पितरश्श्राद्धदेव
ताः । प्रीणयन्ति मनुष्याणां पितॄन् श्राद्धेनतर्पिताः।
आयुः प्रजांधनं विद्यांस्वर्गं मोक्षं सुखानिच। प्रय
च्छन्ति तथाराज्यं प्रीतानृणां पितामहा इत्यादि
याज्ञ्यवल्क्यादिस्मृतिभ्यः ॥ जनकविषयपितृश
ब्दप्रवृत्तिनिमित्तं पालकत्वरूपं = रूढिविशेषा
च्च तत्रतत्र व्यवस्थितिर्बोद्धव्या — इत्थं पितृशब्द
स्य पुण्यकर्मसाध्य भोगभोक्तृत्वप्रवृत्तिनिमित्त
कत्वादेवच – बृहदारण्यकोपनिषत्तृतीयाध्याय
पञ्चमब्राह्मणे-अथत्रयोवावलोका मनुष्यलोकःपि
तृलोकोदेवलोक इति सोयंमनुष्यलोकः पुत्रेणैवजय्यो
नान्येनकर्मणा कर्मणा पितृलोको विद्ययादेवलोको देवलो-
कोवैलोकानां श्रेष्ठस्तस्माद्विद्यांप्रशंसन्तीतिषो
डशखण्डिकायाम् — कर्मणा पितृलोक इति पुण्यकर्म
साध्यभोगैश्वर्यालयसत्यलोकान्तसर्वपुण्यलोकानांपितृ

लोकत्वेनसामान्यतो निर्देशस्सङ्गच्छते — अत्र पि
तृशब्दस्य भोगैश्वर्य भोक्तृ तत्तत्पुण्य लोक वासि-
सर्व विषयत्वेसत्येव तेषांलोकानांपितृलोकव्यप
देशस्सम्भवति — नान्यथा — अतएतल्लोकगा
मिनां पितृशब्द व्यपदेश्यताया अवश्यंभावादेत
ल्लोक प्राप्तिहेतु धूमादि मार्गस्य पितृसञ्ज्ञाहपु
ण्य कर्मकारिलक्षणगन्तृ सम्बन्ध निबन्धनैव
पितृयाणसञ्ज्ञेतिस्फुटमवगम्यते — एवमत्र—
विद्ययादेवलोक इति विद्यासाध्यतया श्रूयमाणो
देवलोकः परमैकान्तिप्राप्यस्थान भूतमपुनरावृ
त्ति वैष्णव परमपदमेव — सर्वलोकश्रेष्ठतायाइ
हैवश्रूयमाणत्वात् = एकान्तिनस्सदाब्रह्मध्या
यिनोयोगिनो हियेतेषांतत्परमंस्थानंयद्वैपश्य
न्तिसूरयः॥ गत्वागत्वानिवर्तन्ते चन्द्रसूर्यादयो
ग्रहाः। अद्यापिन निवर्तन्ते द्वादशाक्षर चिन्त
काः॥ इतिश्री विष्णुपुराण प्रथमांशषष्ठाध्याय
वचनाच्च — अनत्यदेवलोकशब्दस्य घटकदे
वशब्दस्य प्रागुक्त यावक्ष्यमाणया च रीत्यापरमै

कान्तिपरत्वेसत्येववैष्णवपरमपदासाधारण्यंप्रक
रणविवक्षितंलभ्यते — नान्यथा — देवशब्दप्रवृ
त्तिनिमित्तभूतंपरमैकान्तित्वंपरमपदवासिष्वेव-
चपुष्कलं — किञ्चिन्न्यूनंतदन्वयंप्रत्यासन्नप्र-
वृत्तिनिमित्तान्वयंवासमाश्रित्यैव-चात्रत्येषुमुमु-
क्षुषुभगवद्भक्ताग्रेसरेषुप्रागुदाहृतस्थलेषुदेव
शब्दप्रयोगः — अतएवच — ऊर्ध्वगत्यांहियस्ये
च्छातस्योर्ध्वपुण्ड्रमुच्यते । ऊर्ध्वगत्वातुदेवत्वं
प्राप्नोतीहनसंशयइतिश्रीनारदीयपुराणसप्तति
तमाध्यायवचनेनभगवद्भक्तानांपरमपदप्राप्त्य
नन्तरमेवपरमैकान्तित्वलक्षणदेवत्वप्राप्तिरव
गम्यते । — अतोत्रदेवलोकशब्दितपरमपदगामि
नांदेवशब्दव्यपदेश्यतायाअवश्यंभावादेतल्लोक
प्राप्तिहेत्वर्चिरादिमार्गस्यदेवसञ्ज्ञार्हपरमैकान्ति
लक्षणगन्तृसम्बन्धनिबन्धनैवदेवयानसञ्ज्ञे
त्यपिस्फुटमवगम्यते — तस्मात्पितृयाणशब्द
घटकपितृशब्दः — देवयानशब्दघटकदेवश
ब्दश्चतत्तन्मार्गगन्तृविषयएव — अतएवच —

पितॄणाम्मर्त्यानामिति — देवानाम्मर्त्यानामितिच
पितृदेवशब्दयोर्द्वयोरपिमर्त्यशब्दसामानाधिक
रण्येनेहव्यपदेशः कृतः = एतेन — अत्र - पितृ
देवशब्दयोर्मर्त्यशब्देनसामानाधिकरण्यमस्वी
कृत्य — एकास्मृतिर्देवान्प्रापयति — अन्यापितॄ
न्प्रापयति — गन्तारश्चानयोरुभयोर्मर्त्याइति-
प्राप्यविधयादेवपितृसम्बन्धित्वंगन्तृविधयाम
र्त्यसम्बन्धित्वंचदेवयानपितृयाणयोः प्रतिपादय
त्ययम्मन्त्र इत्यभिप्रायेणशङ्करकृतव्याख्यानंनि
रस्तम् — देवयानगामिनाम् — सएनान्ब्रह्मगमय
तीतिब्रह्मण एवप्राप्यत्वाभिधानेनदेवानांप्राप्य
त्वानवगमात् — पितृयाणगामिनां — येवैकेचा
स्माल्लोकात्प्रयान्तिचन्द्रमसमेवतेसर्वेगच्छन्ती
ति कौषीतकिब्राह्मणोपनिषत्प्रथमाध्यायेश्रवणा
त् — पितृलोकादाकाशमाकाशाच्चन्द्रमसमि-
ति — छान्दोग्यपञ्चमप्रपाठकदशमखण्डे श्र
वणात् — पितृलोकाच्चन्द्रमिति बृहदारण्यका
ष्टमाध्याय द्वितीयब्राह्मणे श्रवणाच्च — स्वर्गाप

रपर्यायचन्द्रस्यैवप्राप्यतायास्सिद्धतया पितृवर्ग स्यप्राप्यत्वासिद्धेः। पितृवर्गघटकतयास्वात्मना मपि पितृभावस्य कथंचित्प्राप्यतायास्सम्भवदु- क्तिकत्वेपिस्वभिन्नपितृगणस्यपुरुषार्थविधया प्राप्यतायाः कथञ्चिदप्यसम्भवात् — वस्तुतः। स्वर्गापरपर्यायचन्द्रमण्डले देवानामुपकरणीभूय तद्दत्तभोगस्वीकरणादिमुखेन तत्प्राप्तेरेव = पितृ लोकाच्चन्द्रंते चन्द्रं प्राप्यान्नं भवन्तिता ँ स्तत्रदे वायथासोम ँ राजानमाप्यायस्वापक्षीयस्वेत्येव मेना ँ स्तत्र भक्षयन्तीति बृहदारण्यकश्रुत्या॥ पितृलोकादाकाशमाकाशाच्चन्द्रमसमेषसोमो राजातद्देवानामन्नंतन्देवाभक्षयन्तीति छान्दो ग्यश्रुत्या — एवंजातीयकश्रुत्यन्तरैश्चविवक्षि ततायाः = भाक्तंवाऽनात्मवित्वात्तथाहिदर्शय तीतितदन्तरप्रतिपत्त्यधिकरण शारीरकसूत्रभा ष्यादिसिद्धत्वेनपितृयाणस्यैवदेवयानसञ्ज्ञा प्रसङ्गाच्चदेवयानपितृयाणशब्दघटकदेवपितृ शब्दयोः प्राप्यविषयत्वासम्भवात् = एषदेवप

थोब्रह्मपद इतिच्छान्दोग्य वाक्ये क्रमेणसञ्ज्ञाद्वयस्य गन्तृगन्तव्यसम्बन्ध निबन्धनतायाएवस्वरसतः प्रतीयमानत्वात् — तत्रत्यदेवपथशब्द घटक देवशब्दस्यातिवाहिक देवपरतयास्वकृत व्याख्यान-विरुद्धत्वाच्च = नन्चमासेभ्योदेवलोक मितिदेवयानेदेवलोकसम्बन्धस्य—मासेभ्यः पितृलोकमिति पितृयाणे पितृलोक सम्बन्धस्यच्च श्रवणात् —देवयानगामिनांदेवप्राप्तेः — पितृयाण गामिनांपितृप्राप्तेश्चावर्जनीयतयातादृशतत्प्राप्तिहेतुत्वनिबन्धनमेवेदं सञ्ज्ञाद्वय मितिवाच्यम् = यएवंविद्वानुदगयनेप्रमीयतेदेवानामेवमहिमानंगत्वादित्यस्यसायुज्यंगच्छत्यथयो दक्षिणेप्रमीयतेपितृणामेवमहिमानंगत्वाचन्द्रमसस्सायुज्यं सलोकतामाप्नोत्येतौवैसूर्याचन्द्रमसोर्महिमानौब्राह्मणो विद्वानभि-जयतितस्माद्ब्रह्मणोमहिमान माप्नोतीतितैत्तिरीयकश्रुत्यादेवयानगामिनामेव विदुषा मुत्तरायणेदेवमहिमप्राप्तिपूर्वकसूर्यसायुज्यप्राप्तेः = दक्षिणायनमरणेपितृमहिमप्राप्तिपूर्वक चन्द्रसायु

ज्यप्राप्तेश्चानुषङ्गिकार्वाचीनफलतयाभिधानेनते
षांदेवलोकाभिमान्यातिवाहिकदेवतानुगन्तव्यता
नैयत्येपिदेवलोकवासिदेवजनसम्प्राप्तिनैयत्याभा
वेनतस्यादेवयानसञ्ज्ञानिमित्तत्वासम्भवात् —
अनियतायास्तत्प्राप्तेरपिसञ्ज्ञानिमित्तत्वेतादृश्याः
पितृमहिमप्राप्तेरपिसत्वात्तद्बलेनदेवयानसञ्ज्ञि
तमार्गस्यैवपितृयाणसञ्ज्ञाया अपिप्रसङ्गेन —
धूमादिमार्गविषयायाःपितृयाणसञ्ज्ञायाअपि
देवयानव्यावर्तकत्वासम्भवप्रसङ्गात् — मार्गमध्य
वर्तिदेवलोकपितृलोकगतदेवपितृणामानुषङ्गि
कप्राप्तिसम्भवेपितन्मार्गगन्तृप्रेप्सिततमत्वाभा
वेनदेवयानपितृयाणघटकयानशब्दार्थतावच्छे
दकगमनसाधनत्वादिघटकगमनक्रियायांक
र्मतया तेषामन्वयासम्भवात् = कर्तुरीप्सितत
मंकर्म १-४-४९ इत्यनुशासनेनकर्तुःक्रिययाव्या
प्तुमिष्टतमस्यैव कर्मसञ्ज्ञाविधानात् — तथायुक्तं
चानीप्सितम् -१-४-५० — इत्यनुशासनेनानी
प्सितस्यापिकर्मसञ्ज्ञाविधानेपि तादृशानुशास

नसिद्धकर्मसञ्ज्ञायाः – ग्रामंगच्छंस्तृणंस्पृशति-
ओदनंवुभुक्षुर्विषंभुङ्क्ते इत्यादिष्विवेप्सिततमक
र्मकस्वीयानुषङ्गिकत्वाभिव्यञ्जकक्रियान्तर
समभिव्याहृतक्रियाकारकस्यैवसम्भवेनेहास
म्भवात् – अन्यादृशकर्म सञ्ज्ञानुशासनस्ये
हाप्रसङ्गाच्च = ईप्सिततमंकर्मच-देवयानगामि
नां ब्रह्मेति – पितृयाणगामिनांचन्द्रमाइतिच-स
एनान्ब्रह्मगमयतीतिश्रुत्या – येवैके चास्माल्लोका
त्प्रयन्तिचन्द्रमसमेवतेसर्वेगच्छन्तीतिश्रुत्याच
स्पष्टमेवदर्शितम् – इत्थञ्चदेवयानपितृयाणश
ब्दघटकयानपदार्थतावच्छेदकघटकगमनक्रि
यायांदेवपितृशब्दार्थस्यकर्मतयान्वयासम्भवे-
नकर्तृतयैवान्वयस्यवाच्यतयायथोक्तरीत्याप
रमैकान्तिनांदेवसञ्ज्ञितानाम्मर्त्यानामेवगन्तृ
णांसम्बन्धनिबन्धनादेवयानसञ्ज्ञा – पुण्यक
र्मणाम्मर्त्यानामेवपितृसञ्ज्ञितानांगन्तृसम्बन्ध
निबन्धनापितृयाणसञ्ज्ञा – इममेवचार्थमुदा
हृतबृहदारण्यकोपनिषन्मन्त्रःप्रतिपादयतीति

सिद्धम् -दिवुक्रीडाविजिगीषाव्यवहारद्युतिस्तु
तिमोदमदस्वप्नकान्तिगतिष्वित्युक्तदीव्यतिधा-
तुनिष्पन्नोदेवशब्दः। दीव्यन्ति-विजिगीषन्तइ
तिव्युत्पन्नः-योगशक्त्या-मुमुक्षुप्रतिनियत
तप्तसुदर्शनादिभगवल्लाञ्छनग्रहणादिलक्षण
वैष्णवदीक्षाधारणेनसंसारजयरूपविशिष्टजयकां
क्षितां प्रतिपादयन्-रूढिशक्त्याच-भगवन्ना
रायणाज्ञानुवर्तनैकशीलतांच प्रतिपादयन् यथो
क्तलक्षणसंसारजयकाङ्क्षित्वरूपयोगशक्त्यता
वच्छेदकप्रकारकभगवन्नारायणाज्ञानुवर्तनैकशी
लत्वरूपरूढिशक्त्यतावच्छेदकावच्छिन्नविशेष्यकविशि
ष्टोपस्थितिंजनयन्यथोक्तलक्षणमुमुक्षुपरमैकान्तिभाग
वताग्रेसरासाधारणोभवति-ईदृशएवचदेवशब्दोदेवया
नशब्दघटकः।अयमेवच-यज्ञेनयज्ञमयजन्तदेवाः-पु
नन्तुमादेवजनाः-येनदेवाःपवित्रेण-इत्यादिश्रुतिषु
श्रूयते-नित्यसूरिविषयश्चदेवशब्दः-योगशक्त्याकाष्ठा
गताद्युतिस्तुतिमोदान्-रूढ्यापूर्वोक्तार्थंचप्रतिपा
दयति। ईदृशश्चदेवशब्दः-यत्रपूर्वेसाध्याःसन्तिदेवाइ

त्यादिश्रुतिषुश्रूयते – इन्द्रादिविषयश्चदेवशब्दः। यो
गशक्त्या- यथासम्भवंक्रीडामदस्तुतिमोदान् -रूढ्या
भगवन्नारायणाज्ञानुवर्तनशीलतांच प्रतिपादयति-
अयंच्च सर्वत्र प्रसिद्ध प्रयोगः। एवमेष शब्द उक्तल
क्षणैः प्रवृत्ति निमित्तैस्तत्तदसाधारण एव प्रयुज्यते-
यज्ञेन यज्ञमयजन्तदेवाइत्यत्र – देवशब्द उक्तलक्ष
णपर मेकान्ति विषय एवेत्ययमंशः – तानिधर्माणि-
प्रथमान्यासन्नित्यत्र तद्धर्माणां प्रथम धर्म तावर्णने
नापि निश्चितोभवति – श्रीभारते शान्तिपर्वण्येको
नपञ्चाशदधिक त्रिशततमाङ्कचिह्निते नारायणी
यान्तर्गते पञ्चदशाध्याये – अहो ह्येकान्तिनस्सर्वा
न्प्रीणाति भगवान्हरिः। विधि प्रयुक्तां पूजांचगृ-
ह्णाति भगवान्स्वयमित्यारभ्य – एकान्तिनस्तु पुरु
षागच्छन्ति परमंपदम् – नूनमेकान्ति धर्मोयंश्रेष्ठो
नारायणप्रियइति परमैकान्तिनां परमपदगामित्वं।
तद्धर्मस्यपरमोत्कृष्टत्वं चोक्त्वा तन्निरूपणोपक्रमे-
ततःप्रावर्ततदा आदौकृतयुगंशुभम् – ततोहि-
सात्वतोधर्मोव्याप्यलोकानवास्थितः॥ तेनैवाद्येन

धर्मेण ब्रह्मा लोकविसर्गकृत् ॥ पूजयामास देवेशं हरिं नारायणं प्रभुमित्यत्र - निरूपणान्ते - नारदेन सुसम्प्राप्तस्सरहस्यस्ससङ्ग्रहः ॥ एष धर्मो जगन्नाथात्साक्षान्नारायणान्नृप ॥ एवमेष महान् धर्मस्साद्यो राजन्सनातनः । दुर्विज्ञेयो दुष्करश्च सात्वतैर्धार्यते सदेत्यत्र च - यथोक्तलक्षणपरमैकान्तिधर्मस्यैवादिमधर्मत्वकथनेनोक्तश्रुतेः परमैकान्तितद्धर्मविषयतयोपबृंहितत्वात् - तथा च पूर्वोदाहृतविष्णुतत्त्वसंहितावचनैः - येन देवाः पवित्रेण - आत्मानं पुनते सदेत्यादिश्रुतीरुपबृंहयद्भिः - स्वाभाविकभगवद्दास्यानुगुणतप्तसुदर्शनादिभगवल्लाञ्छनधारिपरमैकान्तिभागवताग्रेसराणां देवसञ्ज्ञाविधानात् - अनायुधासोऽसुरा अदेवा इति वै श्रुतिरिति प्रागुदाहृतबृहद्धारीतस्मृतिवचनोपात्तश्रुत्या तप्तसुदर्शनादिभगवद्दिव्यायुधलाञ्छनविरहिणां देवसञ्ज्ञाप्रतिषेधात् - यज्ञेन यज्ञमयजन्त देवा इत्यादिश्रुतौ देवसञ्ज्ञाभाजां यथोक्तलक्षणपरमैकान्तिभागवताग्रेसरा

णामेव - तेहनाकं महिमानस्सचन्ते - यत्रपूर्वेसाध्या स्सन्तिदेवा इति नित्यसूरिपरिषदावासभूतवैष्णवप रमपदाख्य नाकविशेषगामितायाश्श्रवणात् - त दानुगुण्येन पूर्वोपपादितप्रमाणयुक्त्यन्तरैश्च मुमु क्षुब्रह्मविदसाधारण ब्रह्मपदशाब्दितार्चिरादिमार्गस्य देवयानसञ्ज्ञायाईदृशाधिकारिविशेषगमनैक- निबन्धनतायाः प्रागावेदितत्वात् - देवयानब्रह्मप थशब्दनिर्दिष्टार्चिरादिमार्गादन्यमार्गस्यब्रह्मवि दांक्काप्यश्रवणाच्च - तप्तसुदर्शनादि भगवद्दिव्यायु धलाञ्छनधारिपरमैकान्तिभागवताग्रेसराएवदे वयानेनपरमपदं गत्वाब्रह्मप्राप्नुवन्तिनान्यादृशा इतिसिद्ध्यापविभ्रन्तइतिप्रागुदाहृतश्रुत्यर्थएव सुदृढमुपपादितइतिसिद्धं भवतीति ॥४०॥ ब्रह्मवि- दां ब्रह्मप्राप्तयेकेनचिन्मार्गेणक्वचिद्गमनमेवनास्ती तिकुदृष्टिदुर्वादस्तु श्रीभाष्यादिष्वेव निर्मूलित इतिनेहतन्निराकरण प्रपञ्चः क्रियते ॥४१॥- एवं तत्रैव विष्णुतत्त्वसंहितायां चतुर्थपटले - ब्र ह्मचारीगृहस्थोवावानप्रस्थोथभिक्षुकः ॥ एते

ह्याश्रमिणः प्रोक्ताश्चत्वारः क्रमयोगतइत्यारभ्य-
चक्रलिङ्गधरास्सर्वे समयव्रतनिष्ठिताइत्युक्तम्-
॥४२॥ अत्र चतुर्णामप्याश्रमिणांच क्राद्यङ्कनपूर्व-
कमेव मोक्षोपायिक भगवद्धर्म प्रवेशाधिकारः प्रति
पादितः॥४३॥ — पराशरसंहितायामपि गृहार्चनप्र
तिष्ठाप्रकरणउक्तम् श्रोत्रियो विष्णुभक्तस्तु गृहस्थश्शा
स्त्रवित्तमः। चक्रलिङ्गधरोविप्रः प्रतिष्ठां कर्तुमर्ह
ति॥ तेन प्रतिष्ठितस्तत्र सान्निधत्ते सदाहरिः। देव-
तान्तर भक्तोवासमबुद्धिरथापिवा। नास्तिकोवेदही
नोवानप्रतिष्ठांसमाचरेदिति॥४४॥ अत्र – भगव
न्मूर्तिप्रतिष्ठायामन्येषामनधिकारं प्रतिपाद्य चक्रा
ङ्कितभगवद्भक्ताग्रेसराणामेवाधिकारं-तैः प्रति
ष्ठापितायामेव मूर्तौ भगवत्सान्निध्यविशेषंच प्रति
पाद्य तन्मुखेन तेषांश्रैष्ठ्य प्रतिपादनेनोत्तमभग
वद्भक्तानांचक्राङ्कनमावश्यकमित्ययमंशः प्रस्फु
टमवगम्यते॥४५॥ नारदीयपद्धतावपीदमुक्तम्-
गृहस्थश्श्रोत्रियो विप्रो नित्यकर्मरतश्शुचिः। शा
न्तश्चक्रधरोदान्तस्सद्भक्तोदोषवर्जितः। शास्त्र-

ज्ञः कर्मदक्षश्च प्रतिष्ठां कर्तु मर्हतीति ॥ ४६ ॥ एवं सनत्कुमारसंहितायामप्युक्तम् — सर्वपापविनाशार्हे रथाङ्गस्य तु धारणम् । सर्वकल्याणदमिह पश्चात्संसार नाशनम् । सुवर्णरूप्यताम्राद्यै र्लोहेनच्च तथैवच्च । तथा रथाङ्गमष्टारं सुनाभिञ्च सुवृत्तकम् ॥ ज्वालाचतुष्कसंयुक्तं कृत्वाचैवं विधानतः । अग्नौ प्रताप्य विधिवद्धारयेद्भक्तिसंयुतमिति ॥ ४७ ॥ विहगेन्द्रसंहितायामप्युक्तं — श्रीभगवानुवाच — शृणुष्व विहगेशानसदात्वं वचनं मम ॥ श्रुतिस्मृतिस्वरूपेण जगतामुपकारकम् ॥ सर्वकर्माधिकारश्च शुचीनामेव चोदितः । शुचित्वं नियतं तस्ययो बिभर्त्या युधानिमे । अश्वमेधसहस्रस्य वाजपेयायुतस्यच्च । यत्फलं श्रूयते तत्स्यान्मदीयायुध धारणात् । पर्वताग्रे नदीतीरे देवतायतनेषुच । तपसायत्फलं तत्स्यान्मदीयायुध धारणात् । तद्धारण विधिं वक्ष्ये महापातक नाशनम् । चक्रंशङ्खं समाराध्य गन्धपुष्पादिभिश्शुभैः । अन्नवद्यं चनैवेद्यं विनिवेद्य च भक्तितः । सुदर्शननमस्तेस्तु पाञ्चजन्य नमो

स्तुते।इति मन्त्रं समुच्चार्य नमस्कुर्यात्पुनःपुनः। ततःपावकमभ्यर्च्य जुहुयाद्वैष्णवाहुतीः।जुहुयाद्वह्निमध्ये तु हविषा षोडशाहुतीः।वेदादिभिस्तथामन्त्रैः स्रुचैव जुहुयात्घृतम्। चक्रं च पाञ्चजन्यं च तस्मिन्नग्नौ विनिक्षिपेत्॥पुनः पूजा प्रकर्तव्या गन्धपुष्पोपहारकैः। मद्भक्तानभ्यनुज्ञाप्य प्रणम्यान्प्रणमन्सुधीः। अग्निनैव तु संयुक्तं चक्रमादाय मामकम्। दक्षिणं बाहुमूलं स्वं दहेद्विगतसाध्वसः। अथवान्येन केनापि वैष्णवेन महात्मना। लाञ्छितं बिभृयाच्चक्रं पाञ्चजन्यं तथैव च। उच्चारयन्निमं मन्त्रं हृदये मां विचिन्तयेत्। सुदर्शन महाज्वाल कोटिसूर्यसमप्रभ। अज्ञानान्धस्य मे देव विष्णोर्मार्गं प्रदर्शय। इमं मन्त्रं समुच्चार्य दक्षिणं बाहुमङ्कयेत्। पाञ्चजन्य निजध्वानध्वस्तपातकसञ्चय॥ पाहि मां पापिनं घोरं संसारार्णवपातिनम्। इति मन्त्रं समुच्चार्य दहेत्सव्यभुजं तथा। य एतेन विधानेन शङ्खचक्रं च धारयेत्। त्रिषु लोकेष्वसन्दिग्धमद्भक्त इति गीयते॥ श्रीगरुड उवाच — चक्रादिधारणे देव घोरसंसारतारणे। अ

आधिकारणंब्रूहि विधोकेवाधिकारिणः। त्वद्दृतेमम वक्तात्वनान्योऽस्तिभुवनत्रये। ख्याहिसर्वलोकस्यममप्रीतिकरःपरः॥ श्रीभगवानुवाच॥ गुरुत्स भाविशेषेणसर्ववर्णेष्वयंविधिः। विप्रोवायदिवाक्ष त्रोवैश्यश्शूद्रस्तथैवच। अन्येसङ्करजाताश्च चक्राङ्कामम वल्लभाः। चक्राङ्कितशरीराय हव्यंकव्यं द्विजातये। योददातिनरःप्राज्ञस्सभवेत्पुण्यकृत्तमः। शरीरेयस्यकस्यापिदृश्यतेवैसुदर्शनम्। तस्मैकु र्वन्तिपक्षीन्द्र नमस्कारंसुरादयइति॥४८॥ अत्र तप्तचक्राद्यङ्कनस्यसर्वकर्माधिकारप्रयोजकनिर तिशयशुद्धिहेतुत्वम्– अश्वमेधसहस्रवाजपेया युतसमानफलत्वम्– निरवधिकतपस्समानफ लत्वम्। निश्शङ्कभगवद्भक्तासिद्धिहेतुत्वम्– देवादिवन्दनीयताहेतुत्वम्– सर्वाधिकारियोग्य त्वंचस्फुटतरम्प्रतिपादितम्॥४९॥ ब्रह्म संहितायामप्युक्तम्– अनायुधासो असुरान देवाइतिचैश्रुतिः। इहामुत्रचतेषांवा आसुरोभाव उच्यते। आसुरोविद्यतेभावोयावदेषांद्विजन्मना

म्। नतावदधिकारोस्तिममाराधनकर्मणि। नाधिकारोर्चनेयावन्मोक्षाशाविद्यतेकुतः। मुक्तिद्वारं त्वमेवानस्सहस्रारनिशामय। श्रद्धयाधारयिष्यन्ति ममचक्रं सुदर्शनम्। ज्ञात्वासर्वपदार्थेषु शुद्धिस्तेषां पदेपदे। शालायां भाजनेवस्त्रेगृहोपकरणेषुच। चमसोलूखलेपीठे पक्वान्नेचक्रमुल्लिखेत्। पशुपुत्रकलत्रेषुयानवाहनभूमिषु। सुदर्शनतवाङ्केन प्राकृतत्वं प्रयास्यति। मामकीनोजनोलीभान्मोहाद्वेषाच्चलज्जया। नाङ्कयिष्यतियोमूढस्तस्य नैवास्तिसद्गतिः। अङ्कनंममचक्रस्यवत्समस्तीतिकारणम्। यथाकलानिधेःसम्यगुदयःक्षीरवारिधेरिति ॥ – ज्ञानंनजायतेमीषामन्यरूपेणवैदिकम्। नपदम्ममविख्यातं वैष्णवं प्रकृतेःपरम्। ज्ञानिनोयत्वयास्पृष्टास्तापादिविधिनारहः। अज्ञाश्चधारयासद्यःयास्यान्तिपदवीम्मम। द्वादशारेणतस्मेनवलयत्रयशोभिना। ज्वालाचतुष्कयुक्तेन पूतायान्तिममालयम्। सुदर्शनमहाज्वालसूर्यकोटिसमप्रभ। अज्ञानान्धस्यमेदेव-

विष्णोर्म्मार्गम्प्रदर्शय । इतिसम्प्रार्थ्ययो बाहौ गायत्र्या
चैव धारयेत् । सएववैष्णवो लोके नत्सेवारहितोपि
हीतिच द्वितीयाध्याये भगवत्सुदर्शनसंवादे ॥ श्री
वत्सउवाच - भगवन् देहशुद्धिर्हि कीदृशीकेनजा
यते । मन्त्रराजस्य माहात्म्यं मन्त्रराजश्चकोभवेत् ॥
श्री नारायणउवाच । श्रुत्वाशास्त्रमशेषेण प्रवृत्तं
वातथेतरत् । निवृत्तिंहृदये कृत्वापर धर्मायसं-
ज्ञितः । विरक्तोवा गृहस्थोवा सकामो ऽकामए
वच । तापादिना विमुच्येत पातकैःकोटिजन्मजैः ।
एषावैष्णव सिद्धान्तेसंस्क्रियापरमामता । सुदर्शना
भिनातप्त्वा शरीरंयद्विशोध्यतइति = शङ्खचक्रा
ङ्कितंगात्रंदयाया भाजनंहरेः । अतिवर्तितुमप्येत-
न्नभवन्तियमादयइतिचप ञ्चमाध्यायेश्रीनारायण
श्रीवत्ससंवादेच ॥ ५० ॥ अत्रभगवद्दिव्यायुधला
ञ्छनविरहिणामसुरभावंदेवसञ्ज्ञाविरहंचोक्त्वा
यावदसुरभावोस्ति - तावद्भगवदर्चनेधिकारा-
भावम् । यावद्भगवदर्चनाधिकाराभावः - ताव
न्मोक्षाशाप्रसङ्गस्यैवानवकाशंच प्रतिपाद्य ततो

मुक्तिद्वारत्वं सुदर्शनास्याभिधाय – लोकस्यद्वारमि तिश्रुतिंव्याख्याय – सुदर्शनलाञ्छन धारणस्य – मोक्षकारण भगवदर्चन तदौपयिक भगवन्मन्त्रग्रह णादिलक्षणभगवद्धर्म प्रवेशौपयिक निरतिशय-देहशुद्धि विशेषहेतुत्वम् – सकलोपकरणशुद्धिहे तुत्वम् – निरतिशय भगवत्प्रीतिहेतुत्वम् – वैष्ण वत्वहेतुत्वम् – तदभावे वैष्णवत्वाभावः – वैष्ण वपरमपद प्राप्त्यभावः – अतएवचास्यपरमसं-स्कार रूपत्वंयमादिदुर्धर्षतापादकत्वंचेत्येवमा दिकमभिधाय मुमुक्षूणांतप्तसुदर्शन धारणादिक मत्यावश्यकमिति प्रस्फुटमेव प्रतिपादितम् ॥५१॥ एवमन्यासु बह्वीषुसंहितासु सुदर्शनादि भगवद्दि व्यायुधलाञ्छन धारण विधायकवचनानिद्रष्ट व्यानि ॥५२॥ तथाच्चकर्म भाग विद्या भागात्मके-षुवेदेषु ब्रह्म विद्या भाग निरूपणैदम्पर्य प्रवृत्तसा क्षाच्छ्रीमन्नारायण मुखाविर्भूत श्रीपाञ्चरात्रसं हितासु यथोक्तरीत्या प्रतिपादनेन मोक्षकारण परविद्याङ्गतया तप्तसुदर्शनादि भगवद्दिव्यायुध

लाञ्छनधारणमावश्यकमितिप्रतिपादितम्भवति
॥५३॥ परविद्याङ्गतयास्यावश्यकत्वप्रकारश्चसन्मा
र्गदीपेसप्रपञ्चमस्माभिर्निरूपितः॥५४॥सचतत्रै
वद्रष्टव्यः॥५५॥ अथ स्मृतिषु भगवद्दिव्यायुध
लाञ्छनधारणप्रमाणानिप्रदर्श्यन्ते ॥५६॥कर्म
भागविद्याभागात्मकेषुवेदेषुकर्मभागनिरूपणैदम्प
र्यप्रवृत्ताःकाश्चनस्मृतयः– तत्तद्देवतोपासनलक्ष
णविद्याभागनिरूपणैदम्पर्यप्रवृत्ताश्चकाश्चनस्मृ
तयइतिद्विविधास्स्मृतयः॥५७॥तत्रापिसाक्षात्प
रब्रह्मभूतश्रीमन्नारायणोपासनलक्षणमोक्षकार
णपरविद्यापरवेदभागनिरूपणैदम्पर्यप्रवृत्तासु
विशिष्टधर्मशास्त्रशब्दितासुस्मृतिष्वेवचप्रायशो
भगवद्दिव्यायुधलाञ्छनधारणंप्रतिपाद्यते– पर
विद्याङ्गभूतस्यतस्यतत्रैवनिरूपणीयतयाप्रसक्त
त्वात्– वर्णाश्रमसम्बन्धिसामान्यधर्मनिरूपणैद
म्पर्यप्रवृत्तासुकर्मपरवेदभागोपबृंहणभूतासुसा
मान्यधर्मशास्त्रशब्दितासुस्मृतिषुतन्निरूपण
स्याप्रसक्तत्वाच्च॥५८॥ तत्रापिच.मोक्षप्रस्तवे

क्वचित्क्वचित्सङ्क्षेपतस्तत्प्रसङ्गो दृश्यते ॥५९॥ यथो क्तम्मनुनाषष्ठाध्याये मोक्षान्तरङ्गवानप्रस्थाश्रमप्रकरणे – एताश्चान्याश्च सेवेत दीक्षा विप्रो वने वसन्। विविधाश्चौपनिषदीरात्मसंसिद्धये श्रुतीः। ऋषिभिर्ब्राह्मणैश्चैव गृहस्थैरेव सेविताः। विद्यातपोविवृद्ध्यर्थं शरीरस्य च शुद्धय इति ॥६०॥ अत्र अन्या दीक्षाश्च – विविधा औपनिषदीश्श्रुतीश्च – आत्मसंसिद्ध्यै सेवेतेति – सङ्क्षेपतस्तापादि पञ्चसंस्कारादिलक्षणा मोक्षान्तरङ्ग साधनपरविद्याङ्गभूत भगवद्धर्मदीक्षाः – तदङ्गिका उपनिषत्पठिताः श्रीमदष्टाक्षरादि मन्त्रलक्षणाः परविद्याश्च मोक्षार्थं ग्राह्यतया विधीयन्ते – आत्मसंसिद्धिशब्दस्य मोक्षपरत्वात् – विद्यातपोविवृद्ध्यर्थं शरीरस्य शुद्धये च ऋषिभिर्ब्राह्मणैश्चैव गृहस्थैरेव सेविता इति दीक्षाणामौपनिषदश्रुतीनां च विशेषणात् – प्रागुदाहृतप्रमाणेषु तप्तचक्राङ्कनादिलक्षणदीक्षाणां वैदिकविज्ञानकर्मसाद्गुण्यलक्षणसिद्धि निरतिशयदेहशुद्धिविशेषहेतुतायास्स्फुटतरं प्रतिपाद

नेन- तदेक कंठ्यस्योदाहृत मनुवचने- विद्यातपो विवृद्ध्यर्थ मितिपदेन शरीरस्य शुद्धय इति पदेन च स्वरसत एव प्रस्फुटमवगम्य मानत्वाच्च ॥६१॥ चक्राङ्कनादि लक्षणदीक्षायास्स्पष्ट मुक्तं हि प्रागुदाहृत प्रमाणेषु - ज्ञानं नजायतेऽमीषामन्यरूपेण वैदिकमित्यनेन बृहद्ब्रह्मसंहितागतेन - व्यतिरेकमुखेन वैदिक विज्ञाना साधारण कारणत्वम् - सिद्ध्यर्थं कर्मणां चैव धार्यं चक्रादि लाञ्छन मित्यनेन भरद्वाजसंहिता गतेन कर्मसाद्गुण्य लक्षण सिद्धि हेतुत्वम् - सर्वकर्माधिकारश्च शुचीनामेव चोदितः। शुचित्वं नियतं तस्य यो बिभर्त्यायुधानि मे इत्यनेन विहगेन्द्र संहितागतेन - द्वादशारेण तप्तेन वलयत्रयशोभिना। ज्वालाचतुष्कयुक्तेन पूतायान्ति ममालय मित्यनेन - भगवन् देह शुद्धिर्हि कीदृशी केन जायत इत्यादिना - सुदर्शनाग्निनातप्ता शरीरं यद्विशोध्यत इत्यन्तेन च बृहद्ब्रह्म संहिता गतेन - चरणं पवित्रं विततं पुराणम् - येन पूतस्तरति दुष्कृतानि - तेन पवित्रेण शुद्धेन पूताः। अ

तिपाप्मानमरातिंतरेमेति काठकश्रुत्या-एवमन्यैश्च निरतिशयदेहशुद्धिविशेषहेतुत्वंच ॥६२॥-चक्रादि लाञ्छनादिलक्षणभगवद्धर्मधारणास्यकर्मसाद्गु-ण्यसिद्धिहेतुत्वंचश्रुतिरपि-चश्रावयति ।= ततो-धर्माणिधारयन् -विष्णोः कर्माणिपश्यत-यतो व्रतानिपस्पशे - इति ॥६३॥ अस्याश्रुतेरित्थं विवरणं बोद्धव्यम् = ततः-विष्णोरेव पारमार्थि करक्षकत्वसद्भावलक्षणात्पूर्ववाक्यसिद्धाद्धेतोः-विष्णोः - विष्णुसम्बन्धीनि - धर्माणि - दिव्यायुध लाञ्छनादिरूपाणि - प्रकरणसामर्थ्यादिहापि विष्णोरित्येतदन्वेति- धारयन् - धारयन्तस्सन्तः सुपांसुलुक् पूर्वसवर्णाच्छेयाडाड्यायाजालः। ७-१-३९ - इत्यनुशासनेन जसस्सुश्छान्दसः-विष्णोः - कर्माणि - स्तुतिपूजादीनि-पश्यत-अ नुतिष्ठतेत्यर्थः - धात्वर्थस्य प्रेक्षणस्यानुष्ठानपर्य न्तस्य विवक्षितत्वात् । कारणवाचिनश्शब्दस्य-कार्यपर्यवसानस्योपचारतसम्भवाच्च - अतएव हि - त्वमिदंकार्यंपश्य- चैत्रइदं कार्यं पश्यत्विता

दौ-पश्यतिरनुष्ठानार्थः प्रयुज्यते-यतः-यथोक्त
लक्षणधर्मधारणाद्वा-तत्पूर्वकाद्भगवदर्चनादि
कर्मकरणाद्वाहेतोः-व्रतानि-श्रौतस्मार्तादी
निसर्वकर्माणि-पस्पशे-स्पशग्रहणसंश्लेषण
योरित्यस्माच्चौरादिकात्-स्पशबाधनस्पर्शनयो
रित्यस्माद्भौवादिकाद्वाधातोर्लिटिरूपम्-सं-
श्लिष्टवान्वाग्रथितवान्वाभवतिपुरुष इत्यर्थः-पक्ष
द्वयेपि-अव्यभिचरितपूर्णफलसिद्धिकराणिय
थास्युस्तथाऽनुष्ठितवान्भवतीत्यर्थःपर्यवस्यति=छ
न्दसिलुङ्लङ्लिटः=३-४-६-इत्यनुशासनेन
कालव्यत्ययः-तथाच-यतः-तस्मात्काङ्क्नादि
भगवद्धर्मधारणादिपूर्वकमनुष्ठितानिसर्वाणिशा
स्त्रीयकर्माणिसम्यगनुष्ठितानिभवन्ति-ततः-
तादृशधर्मधारणपूर्वकंविष्णोःकर्माणिकुरुतेति
मुमुक्षून्प्रतिवेदपुरुषोपदेशःफलतीति ॥६४॥इ
त्थंप्रमाणान्तरसिद्धार्थप्रत्यभिज्ञापकमुदाहृतम
नुस्मृतिवचन मोक्षकारणनानाविधभगवद्धर्म
दीक्षापरमितिस्पष्टम् ॥६५॥ मोक्षार्थंसेवनीयतया

विहितानामन्यासां दीक्षाणां सप्रपञ्चमिह स्वरूप निरूपणाकरणन्तु- तन्निरूपणास्य वर्णाश्रम-धर्म निरूपणेदम्पर्य प्रवृत्त कर्मपरवेद भागोपबृंहण सामान्य धर्मशास्त्रान्तर्भूताया अस्यास्स्मृतेस्स्वाधिकृत कृत्य रूपत्वा भावात् - मोक्षौपयिक भगवद्धर्म निरूपणैदम्पर्य प्रवृत्त पर विद्यापरवेद भागोप बृंहण विशिष्ट धर्म शास्त्राणामेवकृत्यत्वात्- तैरेव सम्यक्कृतत्वे नेहावश्यकर्तव्यत्वाभावाच्चेत्यवधेयम् ॥६६॥ एवमन्यत्रापि सामान्य धर्मशास्त्रे सङ्क्षेपतईदृश धर्म प्रसङ्गोद्रष्टव्यः॥६७॥ उक्तं च शाण्डिल्यस्मृतौ विशिष्ट धर्मशास्त्रे तृतीयाध्याये- पशुपुत्रादिकं सर्वं गृहोप करणानि च। मुद्रयेच्छङ्ख- चक्राभ्यां नाम कुर्याच्च वैष्णवम्। कारयित्वा सुवर्णेन पञ्चायुध गणं हरेः। बध्नीयात्कण्ठ देशेतु बालानां सूतिकागृहे। न मुद्रये दासनानि शयनानि महीतलम्। स्थापयेत्क्षेत्रमध्ये तु शिलां चक्रादि मुद्रिताम्। मुक्तामणि सुवर्णाद्यैः कृत्वा चक्रादि भूषणम्। यथार्हं बिभृयुस्सर्वे पुमां

सस्त्रीजनोपिवेति - तत्रैवपूर्वत्र - अङ्कयेच्छ
ङ्खचक्राभ्यां चूताद्यांश्चम्पकादिकान् । तुलसी
वाटिकां कुर्याच्छङ्खचक्राम्बुजाकृतिमितिच-
॥६८॥ अत्र - चक्रादिभगवद्दिव्यायुधमुद्रणं
प्रथमं विधाय पश्चान्मणिसुवर्णादिकृतभगव
त्स्वायुधप्रतिकृतीनां भूषणविधया धारण-
स्यापि पृथग्विधानेन चक्रादिधारणविधायिश्रु
तीनां भूषणविधया प्रतिकृतिधारणमात्रविषय
तामाश्रित्यतप्तमुद्राधारणपरत्वापलपनं केषां
चिद्दुराग्रहमात्रमूलमितिस्पष्टमवगन्तव्यमास्ति
कैः ॥६९॥ पराशरस्मृतौ विशिष्टधर्मशास्त्रेद्वि
तीयाध्यायेप्युक्तम् । विनायज्ञोपवीतेन विनाच
क्रस्यधारणम् । विनाह्वयेनवैविप्रश्चण्डालत्वम
वाप्नुयात् । विधिनाशङ्खचक्रादिधारणंचोर्ध्व
पुण्ड्रकम् । उपवीतंशिखाबन्धं विप्रस्यसततं
स्मृतम् । चक्रलाञ्छनहीनस्य द्विजत्वं निष्फलं
भवेत् । अचक्रधारिणं विप्रं यः श्राद्धे भोजयेन्न
रः । रेतोमूत्रपुरीषादीन् सपितृभ्यः प्रयच्छति

त्यारभ्य-प्राङ्मुखन्तु समासीनं शिष्यमन्त्र जला
प्लुतम् । प्रतपेच्छङ्ख चक्रादिहेतिभिः प्रयतो गु-
रुः । पवित्रेणाङ्कयेत्पूर्वं बाहुमूलंच दक्षिणम् । श-
ङ्खेन प्रतपेत्सव्यं गदया फालमध्यमम् । तथास्व-
ङ्गेन हृदयं शार्ङ्गेण वतु मस्तकमित्यन्तम् ॥७०॥
वृद्धपराशरस्मृतावुक्तम्-अग्निनैव तु संतप्तं च-
क्रमादाय वै द्विजः । धारयेत्सर्ववर्णानां हरिसालो-
क्यसिद्धय इति ॥७१॥ यमेनाप्युक्तम्-उपवी-
ती शिखी विप्रश्चक्रलाञ्छनसंयुतः । चक्रला-
ञ्छनहीनस्य विप्रस्य विफलाः क्रिया इति=ये-
षां चक्राङ्कितं गात्रं लोकेषु परिदृश्यते । ते वै स्व-
र्गस्य दातारो ब्राह्मणा भुवि देवता इति च ॥७२॥
अत्र द्वितीयं वचनं वरदराजीय स्मृतिसङ्ग्रहेप्यु-
दाहृतम् ॥७३॥ शङ्खोप्याह-उपवीतादिवद्धा-
र्याश्शङ्ख चक्रगदादयः । ब्राह्मणस्य विशेषेण
वैष्णवस्य विशेषत इति ॥७४॥ वृद्धमनुरप्या-
ह-ऊर्ध्वपुण्ड्रं तथा चक्रं नित्यं धारयते नरः । ते-
न तस्याशुभं नश्येच्छुभमस्य विवर्धत इति ॥७५॥

नारदे नाप्युक्तम् । सुवर्णरूप्यताम्राद्यैः कृत्वा शङ्ख सुदर्शनम् । द्विजातिरेकजातिश्च बिभृयादभिसंयुतमिति ॥७६॥ विष्णुव्यासाभ्यामप्युक्तम् ।- ब्राह्मणः क्षत्रियो वैश्य श्शूद्रश्च श्रद्धयान्वितः । चक्रंच पाञ्चजन्यंच बिभृयादभिसंयुतमिति ॥७७॥- बृहद्धारीतस्मृतौ विशिष्टधर्मशास्त्रे द्वितीयाध्याये प्युक्तम् - प्रतप्ते च्छङ्खचक्राद्यैर्हेतिभिर्मन्त्रमुच्चरन् । दक्षिणेतु भुजेचक्रं वामांसे शङ्खमेवच । गदांच फालमध्ये तु हृदये नन्दकं तथा । मस्तकेतु तथा शाङ्र्गमङ्कयेद्विमलं तत इत्यादि ॥७८॥ एवमेतत्स्मृतिवचनानि प्रागप्युदाहृतानि ॥७९॥ अन्यास्वपि स्मृतावनेकस्थलेषु तप्तचक्राङ्कनादि वैष्णवधर्मनिरूपणं बहुलं द्रष्टव्यम् ॥८०॥ सनकस्मृतावप्युक्तम् - विष्णोर्नुकेनमन्त्रेण तापयित्वा सुदर्शनम् । चरणं पवित्रमितिच्च तद्द्वाभ्यामभिमन्त्रयेत् । पवित्रन्ते विततमिति मुद्रये द्दक्षिणे भुजे । ज्ञानं वैराग्यमास्तिक्यं श्रद्धाचाप्यभिव

ईतइति ॥८१॥ इत्थंविशिष्टधर्मशास्त्रस्वरूपा
सुवसिष्ठादिस्मृतिष्वपि बहुलं दृश्यमानानिवे
ष्णावधर्मविषयाणि वचनानि विस्तर भयादिहा
नुदाहृतानि तत्रतत्र द्रष्टव्यानि ॥८२॥ अथे
तिहासगतप्रमाणान्युदाह्रियन्ते ॥८३॥ श्रीवि
ष्णुधर्मेह्यशीतितमाध्याये यमकिङ्कर संवादेय
मेनोक्तम् ॥ भवतांभ्रमतामत्र विष्णुसंश्रयमु
द्रया ॥ विनाज्ञाभङ्गकृन्नैव भविष्यतिनरःक्क
चिदित्यादि ॥८४॥ अस्यवचनस्यायमर्थः-
अत्र- लोके -भ्रमतां सञ्चरताम्- भवताम्-
क्कचिदपि- नरः कोपि- विष्णुसंश्रय मुद्रया-
विना- भगवत्समाश्रयण प्रधानाङ्गभूतचक्रादि
भगवद्दिव्यायुधाङ्कनेन विना- आज्ञाभङ्गकृ
न्नैव भविष्यति- येचक्रादि भगवद्दिव्यायुधा-
ङ्किताःसन्तो भगवन्तंसर्वात्मना प्रपद्यन्ते- ता
न्विनान्यत्रैवभ वद्भिर्मदाज्ञा प्रवर्तयितव्या-
तेषुतुन प्रवर्तयितव्येति ॥८५॥ तथाच- चक्रा
ङ्कितभगवद्भक्तानां चक्राङ्कनमहिम्ना यमव-

श्यताहेतु सर्वपापनिवृत्त्यवगमेन मोक्षप्रतिब
न्धकसर्वपापनिवृत्तिहेतु भगवद्दिव्यायुधाङ्कनं
मुमुक्षूणामावश्यकमिति सिद्धं भवति ॥८६॥
अत्र चक्राङ्कितभगवद्भक्तानांव्यतिरेकमुखे
नयमकिङ्करदुर्द्धर्षत्ववर्णनं यथाविधितप्तचक्रा
ङ्कनजनितबाहुमूलस्थितचक्रचिह्नसन्निहित
सुदर्शनदेवतासम्बन्धिदुस्सहतेजसो विरोधिप्र
धर्षणैकशीलस्य समन्ततः प्रसरणैकनिबन्धन
म्- विष्णुसंश्रयमुद्रया विनेतिवाचोभङ्ग्याचक्र
चिन्हस्यैव तादृशकार्यकरत्वप्रतीतेः। केवलचि
ह्नमात्रस्य तथात्वायोगेन तदधिष्ठायिदेवताया
एव तथात्वस्य तदभिप्रेतत्वाच्च ॥८७॥ तदिदं भ
रद्वाजसंहितान्यासोपदेशे तृतीयाध्याये प्युक्त-
म्। अङ्कितः क्वचिदप्यङ्गे चक्रेणैकेन केवल
म्। अनिष्ठानान्तु भूतानां नतावद्वशगो भवेदि
ति= लक्षणानि स्फुटान्येव क्रियासिद्धिकराणि
तु। धारयन्नोपहन्येत कदाचित्किङ्करादिभि
रितिच ॥८८॥ एवमयमर्थो मात्स्येऽप्यनन्वय

मत्कृष्णार्जुनसंवादेपि स्पष्टमुक्तः । मच्चक्राङ्कित देहो यो मद्भक्तो भुवि दुर्लभः । नैवाप्नोति वशं मृत्यो रप्याज्ञाभङ्गकृन्नरः । नान्यं देवं नमस्कुर्यान्ना न्यं देवं निरीक्षयेत् । नान्यप्रासादमारोहेन्नान्य दाय तनं विशेत् । चक्राङ्कितस्सदा तिष्ठेन्मद्भ क्तः पाण्डुनन्दनेति ॥ ८९ ॥ - एवं श्री विष्णुत- त्वसंहितायामपि नरकप्रस्तावे चक्राङ्कितभग वद्भक्तानां यमवश्यत्वाभाव उक्तः । - चक्रादि धारणं पुंसां परसम्बन्धवेदनम् । पतिव्रतानि- मित्तं हि वलयादि विभूषणम् । वैष्णवेभ्यो बि भ्यन्ति हि देवा नरकरक्षकाः । अमचमानक्रि- यात्तेषां संहरत्यखिलं जगत् । कालेनैतावता तेषु नरकेषु तु कश्चन । न दृश्यते महावीर्यः प्र भावात्परमेष्ठिन इति ॥ ९० ॥ न खलु भागव- ता यमविषयं गच्छन्तीति रहस्याम्नायश्रुति रपीममेवार्थमुद्बोधयति ॥ ९१ ॥ एभिः प्रमा णैरनन्यया जिच्चक्राङ्कितभगवद्भक्तानां भ गवत्प्रभावाद्यमतत्किङ्करवश्यत्वनरकगा

मित्वाद्यभावयमतस्किंङ्कर भयङ्करत्वादिप्रति
पादनम् - विधिवद्धहि सतप्त चक्राङ्कनलक्ष
णसंस्कारविशेषजनितसर्वपापनिवृत्तिपूर्वकनि
रतिशयकायशुद्धि विशेषतादृशचक्राङ्कनजनि
त बाहुमूलस्थितचक्र चिह्न मध्य सतत सुदर्श-
नदेवता सान्निधान महिम्नात्तत्प्रभवाभिप्राय
कमेव ॥९२॥ अतएवहि - निविक्षेपसुषर्णं
भिद्यमानमध्ये बाहुमदधत्सुदर्शनम् । विष्णो
रिदं भूरिदं भूरितेजः प्रधर्षति दिवानक्तं बिभृ
युस्तज्जनासइति प्रागुदाहृतश्रुतिः - बाहुमूले
चक्रधारिणां वैष्णवं सुदर्शनंस दातत्रसान्निहितं
सत् - सुषण शब्दितं सर्वपापजातंयमकिङ्करा
दिसर्वानिष्टभूतजातंच प्रधर्षयति - ततोऽवश्यं
सुदर्शनं धार्यमिति प्रतिपादयति ॥९३॥ इत्थंसु
दर्शनलाञ्छनस्य यमकिङ्कर द्रावणहेतुतायास्स
मन्ततः प्रसिद्धत्वादुदाहृतयमकिङ्कर संवाद
गतश्री विष्णुधर्मवचने - विष्णुसंश्रय मुद्रयेत्ये
तत्तप्त चक्राङ्कन जनित चिह्नगत सुदर्शनसन्नि

धान विषयमेवेतिसिद्धंभवति ॥१४॥ अतएवश्री
विष्णुपुराणतृतीयांशसप्तमाध्याये यमकिङ्करसं
वादगते - वसतिमनसियस्यसोव्ययात्मा पुरु
षवरस्य न तस्य दृष्टिपाते । तवगतिरथवाममा
स्ति चक्रप्रतिहतवीर्यबलस्य सोन्यलोक्यइति
वचने - यमतत्किङ्करयोर्विशेषणवाचिना - च
क्रप्रतिहतवीर्यबलस्येतिशब्देनापिभगवद्भ-
क्तबाहुमूलगतचक्रचिह्नसन्निहितश्रीसुदर्श
नप्रतिहतवीर्यबल त्वमेवयमतत्किङ्करयोः प्र
तिपाद्यतइत्यवगम्यते - उदात्दत श्रुत्यादैकक
ण्ठ्यात् - सदासुदर्शनसन्निधानकारणान्तराद
र्शनात् = परिहरमधुसूदनप्रपन्नानितिप्रपन्न
प्रकरणप्राप्तचक्राङ्कनजनितबाहुमूलचिह्नग
तसततसुदर्शनसन्निधानस्यदुरपह्नवत्वाच्च॥१५॥
अस्मिन्प्रकरणेभगवद्भक्तानांभगवतस्सदात्द
दिसन्निधानेनमानसिकशुद्धेः - सदाकमलन
यनेत्यादिभगवन्नामोच्चारणेनवाचिकशुद्धेश्चा
भिहितत्वात्कायिकशुद्धेरपिवक्तव्यत्वेनपूर्वो-

दाहृतशास्त्रेस्तप्तसुदर्शनधारणस्य निरतिशय
कायशुद्धिहेतुतायाः प्रतिपन्नत्वात् - चक्रप्रति
हृतवीर्यबलस्ये त्यनयावचोभङ्ग्या तादृश चक्र
धारणा जनितकायिकशुद्धिरप्यभिहितैव भवितु
मर्हति ॥१६॥ तथाचोदाहृत विष्णुधर्मवचनेन
यमकिङ्कर द्रावण हेतुतयापि चक्राङ्कनमावश्य
कमित्युक्तम्भवति ॥१७॥ एवंपञ्चमवेदपरिग
णिते श्रीमहाभारतेपि भीष्मपर्वणि षट्षष्टितमा
ध्याये प्रोक्तम् - सर्वधर्ममर्मपारदृश्वना भीष्मेण
दुर्योधनं प्रति - ब्राह्मणैः क्षत्रियैर्वैश्यैश्शूद्रैश्च
कृतलक्षणैः । अर्चनीयश्च सेव्यश्च पूजनीय
श्च माधवः । सात्वतं विधिमास्थाय गीतस्सङ्क
र्षणेनयः । द्वापरस्य युगस्यान्ते आदौ कलियु
गस्यचेति ॥१८॥ अत्र सङ्कर्षणेन यो गीतः -
तं सात्वतं विधिं वेदान्तशास्त्रोपबृंहणं तदुक्त
परविद्याङ्गभगवद्धर्मदीक्षाप्रतिपादकं श्रीपञ्च
रात्रशास्त्रमास्थाय - कृतलक्षणैः - कृततापा
दिपञ्चसंस्काररूपलक्षणैः - ब्राह्मणैः क्षत्रि

ये वैश्ये शूद्रैश्च माधवः - अर्चनीयश्च सेव्यश्च पूजनीयश्च भवतीत्युक्त्या मोक्षोपयिक भगवदर्चनादि लक्षण भगवद्धर्मसामान्याङ्गत्वं यथार्हं सर्ववर्णाधिकारत्वञ्च तसचक्राङ्कनादि लक्षणवैष्णवदीक्षाविधेस्स्पष्टमुक्तम्भवति ॥९९॥ अर्चनमिज्यासञ्ज्ञितं बाह्यं परिपूर्णाराधनम् - पूजनं ध्यागसञ्ज्ञितमाभ्यन्तरमाराधनम् - सेवनं भगवदालयसम्मार्जनोपलेपनपुष्पाहरणादि लक्षण परिचर्याकरणमिति भेदोवसेयः ॥१००॥ तथा चेद शक्तस्येषु सर्वेष्वप्यनधिगत वैष्णवदीक्षाणामनधिकारित्वं यथोक्त वचनतास्सिद्धम्भवति ॥१०१॥ सात्वतशब्दस्य पाञ्चरात्रशास्त्रे प्रसिद्ध प्रयोगत्वात् - प्रागुदाहृतायाम् - विष्णुमन्दिरसंहितायामूकृत चक्रादि लक्षणैरिति - पारमेश्वर संहितायाम् - विप्राद्यास्ते च शूद्राश्च यदेवं कृत लक्षणा इति चोक्त्या च पञ्चरात्रशास्त्रे चक्रादि लक्षणानां कृत लक्षणशब्दे न निर्देश प्राचुर्यदर्शनाच्चात्र त्वः कृतलक्षणैरिति शब्दस्तदुक्तार्चनाद्यङ्ग

भूततापादिपञ्चसंस्काररूपलक्षणपरएव-नान्यादृशलक्षणपर इतिस्पष्टमवगम्यते ॥१०२॥एवमत्रप्रतिपक्षकोटिप्रविष्टस्यश्रीकृष्णस्यसाहायके नैवप्रतिपक्षदुर्जयत्वमम्ता केनाप्युपायेनतद्वशीकरणकामनया। तत्स्वरूपयाथात्म्यं तद्वशीकरणोपायंच जिज्ञासमानाय दुर्योधनाय-श्रीकृष्णाख्यः-श्रीमन्नारायण एवेति तदीयस्वरूपयाथात्म्यमभिधाय-तद्वशीकरणोपायमभिदधता भीष्मेण- ब्राह्मणैः क्षत्रियैर्वैश्यैरित्यादिना श्रीपञ्चरात्रप्रसिद्धतापादिपञ्चसंस्कारलक्षणवैष्णवदीक्षाग्रहणपूर्वकभगवदर्चनादीनामेव तथात्वेन प्रतिपादनात् परब्रह्मभूतश्रीमन्नारायणप्राप्तिलक्षणमोक्षंकाङ्क्षमाणानामुक्तलक्षणवैष्णवदीक्षाऽवश्यंग्राह्येति सिद्धंभवति॥१०३॥ अत्रद्वापरस्य युगस्यान्ते-कलियुगस्यादौच सात्वतं विधिमास्थाय कृतलक्षणैर्ब्राह्मणादिभिर्माधवोऽर्चनीयश्चेत्यादिनास्यधर्मस्योक्तकालविशेषेऽनुष्ठेयत्ववर्णनमस्यधर्मस्य-

सत्वोत्तरजनभूयिष्ठदेशकालेष्वेव प्रचरिष्णुताया अन्येषु देशकालेष्वन्तर्हिततायाश्च श्रीनारायणीयोपाख्यान सिद्धत्वादेतत्कलियुगादौ केनचित्कारणेन क्वचिद्देशविशेषे बहुलसत्वोत्तर जनप्रादुर्भावमवश्य भाविनमवधार्य भीष्माचार्येण कृतम् ॥ १०४॥ अत एव शान्तिपर्वणि नारायणीयोपाख्यानेप्युक्तम् - भविष्यति प्रमाणं वा एतदेवानुशासनमिति भाविसत्त्वोत्तर कालविशेषे प्रचरिष्णुत्वं - ॥१०५॥ अतएवच श्रीमद्भागवते काद शस्कन्धे पञ्चमाध्याये कर भाजनयोगीश्वरेणाप्युक्तम् । - कृतादिषु नरा राजन्कला विच्छन्ति सम्भवम् - कलौ खलु भविष्यन्ति नारायणपरायणाः । क्वचित्कचिन्महाराजद्राविडेषु च भूरिशः । ताम्रपर्णीनदी यत्र कृतमाला पयस्विनी । कावेरी च महापुण्या प्रतीची च महानदी । ये पिबन्ति जलं तासां मनुजा मनुजेश्वर । प्रायो भक्ता भविष्यन्ति वासुदेवे मलाशया इति ॥१०६॥ यद्वा - गीतस्सङ्कर्षणेनयइत्यत्र गीतपदार्थे वा द्वापरस्य

युगस्यान्त आदौ कलियुगस्य चेत्यस्यान्वयोद्र
ष्टव्यः ॥१०७॥ एवं शान्तिपर्वणि मोक्षधर्मे पञ्च
त्रिंशदधिक त्रिशततमाध्याय प्रभृति द्विपञ्चा
शदधिक त्रिशततमाध्याय पर्यन्ताष्टादशाध्याया
त्मक श्रीनारायणीयोपाख्याने श्री पाञ्चरात्र शा
स्त्र प्रक्रियां महता प्रबन्धेन प्रतिपाद्य तस्य शास्त्र
स्य वेदचतुष्टय प्रतिपाद्य सारतमार्थ मयतयाप
रमप्रमाणभूत सर्वोत्तम मोक्षशास्त्र रूपतायाः
प्रतिपादनात् श्रीपञ्चरात्रशास्त्रस्य तप्तचक्राङ्क
नादिलक्षण परमैकान्ति धर्म प्रतिपादकत्वेन सु
प्रसिद्धत्वाच्च पञ्चमवेद परिगणितं श्रीमहाभारतं
प्रणयता भगवता बादरायणेन - तप्तचक्राद्य -
ङ्कनादिलक्षण परमैकान्ति धर्मो मुमुक्षूणामत्य
न्तोपादेयतम इत्यंशस्सु प्रतिष्ठापितो भवति ॥
१०८॥ तत्र तावत् - एकपञ्चाशदधिक त्रिशत
तमाङ्क चिह्निते सप्तदशाध्याये - अहो ह्येकान्ति
नस्सर्वान् प्रीणाति भगवान् हरिः। विधिप्रयु
क्तां पूजां च गृह्णाति भगवान् स्वयमित्यत्र = ए-

कान्तिनस्तु पुरुषा गच्छन्ति परमं पदम् । नूनमेका
न्तिधर्मोयं श्रेष्ठो नारायणप्रियइत्यत्र = सहोप
निषदो वेदान् ये विप्रास्सम्यगास्थिताः। पठन्ति
विधिमास्थाय ये चापि यतिधर्मिणः। ततो विशि
ष्टां जानामि गतिमेकान्तिनां नृणामित्यत्र = एका
न्तिनो हि पुरुषा दुर्लभा बहवो नृप यद्येकान्ति
भिराकीर्णं जगत्स्यात्कुरुनन्दन । अहिंसकैरात्म
विद्भिस्सर्वभूतहितेरतैः। भवेत्कृतयुगप्राप्तिरा
शीः कर्मविवर्जिते त्यत्र = एवंजातीयकेष्वन्येषु
चवचनेषु - एकान्तिशब्देन कांश्चिदधिकारिणो
निर्दिश्य तद्धर्मस्य सर्वोत्कृष्टतानिरूपिता दृश्य
ते ॥१०९॥ तेचैकान्तिनः - तापः पुण्ड्रस्तथानाम
मन्त्रोयागश्च पञ्चमः । अमी परमसंस्काराः पार
मैकान्त्यहेतव इति प्रागुदाहृतपाञ्चरात्रान्तः
पातिभरद्वाजसंहितावचनाद्युक्तरीत्या तप्तसु
दर्शनादिभगवद्दिव्यायुधचिह्नधारणादिलक्ष
ण तापादिपञ्चसंस्कारायत्तपारमैकान्त्यभाज
एवेति तप्तचक्राद्यङ्कनादिलक्षणवैष्णवदीक्षा

वश्यकताभारते सुष्ठु निरूपिताभवति ॥११०॥
एवंतत्रैवचत्वारिंशदधिकत्रिशततमाङ्कचिन्हि
तेषष्ठाध्याये- यथोक्तलक्षणस्यपरमैकान्ति
धर्मस्यपारम्पर्येण प्राप्तिक्रमम् - श्रुतवाद्भिस्स
र्वैर्द्वैर्वैर्मुनिभिरनुष्ठितत्वंचाभिदधतासूतेन
महर्षीन्प्रत्युक्तम् ॥ एतद्वस्सर्वमाख्यातंवैश
म्पायनकीर्तितम् । जनमेजयेनतच्छ्रुत्वाकृतं
सम्यग्यथाविधि । यूयंहि तप्ततपसस्सर्वेचच-
रितव्रताः । शौनकस्यमहासत्रं प्राप्ताःसर्वे द्वि-
जोत्तमाः। यजध्वंसुहुतैर्यज्ञैश्शाश्वतं परमेश्वर
मिति ॥१११॥ अस्यायमर्थो बोद्धव्यः - हेशौ
नकस्यमहासत्रं प्राप्तास्सर्वे द्विजोत्तमाः वैशम्पा
यनकीर्तितम् । जनमेजयम्प्रति वैशम्पायनेन
कथितम् -सर्वमेतत् परमैकान्ति धर्मविषयमा
ख्यानम् - वः - युष्माकम् - आख्यातम् - जनमे
जयेनच - तत् पूर्वोक्तमाख्यानम् - श्रुत्वा- यथा
विधि- सम्यक् - कृतम् - अनुष्ठितम् - तदुक्त
धर्माचरणंयथावत्कृत मितियावत् । सर्वेयूयंवाहि-

तप्ततनवः-पारमैकान्त्यहेतु तप्तसुदर्शनादिभ-
गवद्दिव्यायुधादिचिह्नधारणलक्षणतापसंस्का-
रसंस्कृततनवस्सन्तः-इदमुपलक्षणं तापादिसं-
स्कारपञ्चकस्य-चरितव्रताः-आचरितभग-
वदनन्ययाजित्वयोग्यकृत्स्नवैष्णवदीक्षाधर्मा-
श्चसन्तः-अत एव-सुहुतैः-पूर्णफलजनकह-
वनैः-तापादिसंस्कारविशेषपूर्वकमनुष्ठीयमा-
नानां श्रौतस्मार्तकर्मणामधिकफलहेतुत्वशास्त्रा
दितिभावः। यज्ञैः-शाश्वतम्-नित्यम्-परमेश्व
रम्-सर्वेश्वरेश्वरं श्रीमन्नारायणमेव-नत्वर्वाची
नमनित्यमीश्वरम्-यजध्वम्-अनन्यदैवत्वल
क्षणपारमैकान्त्यभाजांदेवतांतरयजनानर्हत्वा
त्सर्वान्तर्यामिणं सर्वेश्वरेश्वरं नारायणमेवाराध
यध्वमितियावदिति ॥११२॥ अत्रपरमैकान्ति
धर्मविषयकोपाख्यानं श्रावयित्वा तदुक्तधर्मा
नुष्ठानकर्तव्यतां महर्षिभ्यउपदिशतासूतेन
तापसंस्कारपुरस्सरव्रताचरणपूर्वकं नारायणै
कोद्देश्यकयागानुष्ठानोपदेशेन श्रीनारायणीयो

पाख्यानं तसच्चक्राद्यङ्कनादिलक्षणपरमैकान्ति
धर्मविषयमेवेतिस्पष्टमवगम्यते ॥११३॥ तस्मा
त्पञ्चमवेदपरिगणितश्रीमहाभारतेभगवद्दि-
व्यायुधलाञ्छनधारणादिलक्षणवैष्णवदीक्षारू
पःपरमैकान्तिधर्मस्सुप्रतिष्ठापितइतिसिद्धंभव
ति ॥११४॥ इदमत्रावधेयम् - श्रीनारायणीयो-
पाख्याने - इदम्महोपनिषदं चतुर्वेदसमन्वितम्-
साङ्ख्ययोगकृतान्तेन पाञ्चरात्रानुशब्दितमिति-
इदंश्रेयइदंब्रह्मइदंहितमनुत्तममिति- ऋग्य
जुस्सामभिर्जुष्टमथर्वाङ्गिरसैस्तथेति- भविष्य
तिप्रमाणंवैएतदेवानुशासनमितिच।पञ्चरात्र
शास्त्रंपरमोत्कृष्टंवेदचतुष्टयोपबृंहणभूतंवेद
वदेवप्रमाणंसार्वभौमंच प्रशस्य- तदुक्तधर्मस्व
रूपंच- बहुलग्रन्थनिरूपणीयंग्रन्थबाहुल्याभि
यासङ्क्षेपतोनिरूप्य - इदंशतसहस्राद्धिभारता-
ख्यानंविस्तरात्। आविध्यमतिमन्थानंदध्नो
घृतमिवोद्धृतम्। नवनीतंयथादध्नोद्विपदांब्रा
ह्मणोयथा- आरण्यकंचवेदेभ्य ओषधीभ्यो

यथामृतमितीदमाख्यानं सर्वेभ्य आख्यानान्तरेभ्यस्सारतमत्वेन प्रशशंस भगवान्बादरायणः॥ इत्थं प्रशंसतो बादरायणस्यायमाशयः - सकलवेदान्तसारभूतो मोक्षधर्मशिरोमणिः परमैकान्तिधर्मापरनामा भगवद्धर्मः कृत्स्नोऽवश्यं विशदं निरूपणीयः - नचायमल्पेन ग्रन्थेन निरूपयितुं शक्यः - अत एवच बहुसंहिताभेदैरति विपुलं पञ्चरात्रशास्त्रमिमं धर्मं प्रतिपादयति। शक्यं चास्माभिः - साक्षाद्भगवन्मुखाविर्भूतमिदं पञ्चरात्रशास्त्रं परमं प्रमाणं मुमुक्षुभिरस्यादरणीयमितियदुपपादयद्भिरन्तरेणैव बहुलोपपादनं कृतार्थी भवितुमिति - तस्मात्तम चक्राङ्कनादिलक्षणः परमैकान्तिधर्मस्तत्प्रतिपादक श्रीपाञ्चरात्रशास्त्रं परमप्रमाणं मुमुक्षुभिरस्यारणीयं प्रतिपादयता बादरायणेन पञ्चमवेदपरिगणिते श्रीमहाभारते कार्त्स्न्येनैव सम्यक्प्रतिष्ठापितो भवतीति॥ ११५॥ एवं भारतेतिहास

सारतयासर्व शिष्टपरिगृहीतेतिहाससमुच्चयेद्वा
त्रिंशाध्याये श्रीपुण्डरीकाख्याने - केचिच्चक्राङ्कि
तास्तत्र प्राणिनः पुण्यदर्शनाः । विचरन्तियथा -
कामं पुण्यतीर्थप्रशंसिन इत्यादिकमुक्तम् - ११६।
एवं हरिवंशे कैलासयात्रारम्भे भगवतोक्तम् । ना
नादेशसमुद्भूता ब्राह्मणाः क्षत्रिया विशः ॥ चक्रा
ङ्किताः प्रवेष्टव्यायावदागमनम्मम । नामुद्रिताः
प्रवेष्टव्यायावदागमनं ममेति ॥११७॥ एवमन्य
त्रापीतिहासेष्वेवं जातीयकानिप्रमाणानिद्रष्ट
व्यानि ॥११८॥ अथपुराणगतानिप्रमाणान्यु
पन्यस्यन्ते ॥११९॥ पाद्मपुराणे अग्निहोत्रंयथा
नित्यं वेदस्याध्ययनंयथाब्राह्मणस्य तथैवेदं त
सचक्राङ्कधारणमिति ॥ अन्यत्र-धारयेद्विष्णु
भक्तस्तु चक्रं बाहौतुदक्षिणे ॥ वामेतु शङ्खराजा
नं धारयेद्विष्णु माप्नुयात् ॥ चक्रेणैवाङ्कितोवि
द्वान्वासुदेवं समाश्रयेत् - भावमात्तिं समास्था
यब्रह्मलोकं प्रयास्यतीतिचोक्तम् ॥१२०॥ एवं

पाद्मपुराणोत्तरखण्डे - तस्चक्रादिवैष्णवदी
क्षा धर्माबहुधावर्णिताः ॥१२१॥ ॥ तत्र तावत् ।
वसिष्ठ दिलीपसंवादे - श्रीनारायणब्रह्मसंवाद
गर्भित नारद महर्षि जनसंवाद गर्भिते - दिलीपः -
भगव - भवता प्रोक्तास्सर्वधर्मा विशेषतः - वर्णा
श्रमयुता धर्मा नित्यनैमित्तिकक्रियाः ॥ राजधर्मा
श्चयज्ञाश्चतीर्थदानव्रतादिकम् ॥ श्रुता मुनेम-
याश्रेष्ठा - अक्षय्यस्वर्गभोगदाः ॥ अधुनाश्रोतुमि
च्छामि मोक्षमार्गं सनातनम् ॥ दिष्ट्याहं येनगच्छा
मिब्रह्मतद्वक्तु मर्हसि ॥ कोमन्त्रःसर्वमन्त्राणांभ
वरोगैक भेषजम् - सर्वेषामेव देवानां कोहिमो
क्षप्रदः परः । तत्सर्वं ब्रूहि तत्त्वेन मयिवात्सल्य
गौरवात् ॥ वसिष्ठः ॥ साधुपृष्टं त्वयाराजन्सर्व
लोकहितैषिणा ॥ वक्ष्यामि परमं गुह्यमेकं संसा
रतारकमित्यारभ्य प्रवृत्ते - प्रथमेध्याये प्रोक्तं
म् - एवंलक्षणसंयुक्तं शिष्यं सर्वगुणान्वितम् ॥
अध्यापयेद्विधानेन मन्त्ररत्नमनुत्तमम् । द्वाद

श्यां श्रवणे वापि कस्मिंश्चिद्वैष्णवे दिने ॥ सदाचा
र्योपसम्पत्तौ तत्रदीक्षां समाचरेत् ॥ सुदर्शनं पा-
ञ्चजन्यं सुवर्णेन प्रकारयेत् ॥ रौप्येण वापि ताम्रे
ण कांस्ये नापि प्रकारयेत् । स्नाप्य पञ्चामृतैश्शुद्धै
रर्चयेत्सुरतो मम । अर्चयेद्गन्धपुष्पाद्यैस्तन्मन्त्रे
णविधानतः । तत्र संस्थापयेदग्निं स्वगृह्योक्तवि
धानतः । आचार्यो जुहुयादाज्यं मन्त्रेणाथ द्विजो
त्तमः । अष्टोत्तरसहस्रं वा शतमष्टोत्तरन्तु वा ।
जुहुयान्मन्त्ररत्नेन तथान्यैर्वैष्णवैश्शुभैः । मन्त्रैः
पुरुषसूक्ताद्यैर्जुहुयाद्घृतपायसम् ॥ तस्मिन्नग्नौ
क्षिपेच्चक्रं शङ्खं च द्विजसत्तमः । षडक्षरेण जुहु
यादाज्यं विंशतिसङ्ख्यया । प्रतप्तं चक्रमादाय
मन्त्रेणैवाङ्कयेद्गुरुः । शङ्खेनैवाङ्कनं कुर्याद्बा-
ह्वोर्दक्षिणसव्ययोः - होमशेषं समाप्याथ पुनः
पूजां समाचरेत् ॥ ततः कलशमादाय पवित्रो
दकपूरितम् ॥ मन्त्रेणैवाभिमन्त्र्याथ तस्य मूर्ध्न्य
भिषेचयेत् । सितवस्त्रधरं सम्यगाचान्तं विन
यान्वितम् ॥ ऊर्ध्वपुण्ड्रधरं शिष्यं मन्त्रमध्याप

येद्गुरुः ॥ मन्त्रार्थश्च प्रवक्तव्यो वृत्तिश्चैव विशेषतः ॥
लब्धमन्त्रस्तदाचार्यं पूजयेद्भूषणादिभिः । अनेन
विधिना मन्त्रं योधीते वैष्णवाद्गुरोः । ततस्स वैष्णवं
याति नान्यथा सुरसत्तम ॥ एवमुक्त्वा विधातारं दे
वदेवो हरिः पिता ॥ स्वचक्रेणाङ्कयित्वा तं तस्य
मन्त्रं ददौ स्वयम् - सर्वलोकेश्वरो देवो ब्रह्मा मम
पिता प्रभुः । ममापि विधिवन्मन्त्रं प्रददौ मुनिस
त्तमाः ॥ तस्माद्यूयं मुनिश्रेष्ठा धारयित्वा सुदर्शन
म् । नारायणपदद्वन्द्वं गच्छध्वं शरणं द्विजाः ।
इत्युक्ता मुनयस्सर्वे नारदेन सुरर्षिणा ॥ द्वयाधि
कारिणो भूत्वा याता विष्णोः परं पदम् ॥ तस्मात्त्व
मपि राजर्षे विष्णुसायुज्यमिच्छसि । दीक्षामा
र्गविधानेन धारयित्वा सुदर्शनम् - नारायणप
दद्वन्द्वं तदेकं शरणं व्रज ॥ सर्वलोकेश्वरस्साक्षा
द्ब्रह्मा त्रिभुवनेश्वरः ॥ ममापि नारदस्यापि प्रोक्त
वान्मन्त्रमुत्तमम् ॥ शौनकादिमहर्षीणां नैमि
शारण्यवासिनाम् । नारदः प्रददौ मन्त्रं प्रपत्तिं
शरणागतिम् ॥ एतद्ब्रह्मतमं राजन्न जानन्ति म

हर्षयः ॥ देवताश्च न जानन्ति सिद्धसाध्याश्च दानवाः ॥ भक्तश्च मामसवान्मन्त्रं शक्तिपुत्रः पराशरः। इदं रहस्यं परमं लक्ष्मीनारायणं द्वयम्। राजंस्तवापि वक्ष्यामि प्रपत्तिं शरणागतिं। द्वयात्परतरं मन्त्रं नास्ति सत्यं ब्रवीमिते। द्वयात्परतरं मन्त्रं नास्ति लोकेषु किञ्चन ॥ सत्यं सत्यं पुनस्सत्यं ब्रह्मणा कथितं पुरा ॥ नारायणात्परो देवो नास्ति मुक्तिप्रदो नृणामिति ॥१२२॥ अत्रहि परब्रह्मभूते भगवा न्नारायण एव मोक्षप्रदः परो देवः - नान्य इति- तदीय मन्त्र विशेष एव च ब्रह्मविद्यारूपो मोक्षहेतुः। नान्य मन्त्र इति- तादृश भगवन्मन्त्रश्च तप्तचक्राद्यङ्कनादिलक्षणा दीक्षाविधिपूर्वकमेव ग्राह्य इति ॥ प्रागपि च तु मुख नारद वसिष्ठ पराशर नैमिशारण्यवासि शौनकादि महर्षिजनास्तादृश दीक्षापूर्वकमेव यथोक्त भगवन्मन्त्र विशेषं जगृहरिति च स्पष्टमुक्तम् ॥१२३॥ एवमास्मिन्पाद्मोत्तरखण्डे श्रुतिनिकरोप बृंहण पूर्वकं तप्तचक्राङ्कना

दिलक्षणवैष्णवदीक्षाविधिस्सप्रपञ्चं निरूपि
तः- ॥१२४॥ तत्परोभागः प्रागपि किञ्चिदुदा
हृतः ॥१२५॥ एवमन्यदप्येतत्पुराणगतं बहुव
चनजातं तत्र तत्र स्थितं द्रष्टव्यम् ॥१२६॥ श्री
वाराहपुराणेप्युक्तम्- वासुदेवाङ्कनं कुर्यादात्म
नो बाहुमूलयोः। सोऽश्वमेधफलं प्राप्य विष्णु-
लोके महीयत इति ॥१२७॥ तत्रैव क्षेत्रमाहात्म्ये
प्रोक्तम्- मच्चक्राङ्कितदेहो यो मद्भक्तो मनु-
विदुर्लभः। मामेवैष्यति धर्मात्मा मदेकान्तेन चे
तसा। चक्राङ्कितभुजाः केचिद्यत्र कुत्र वसन्ति
वै। योजनानि तथा त्रीणि मम क्षेत्रं वसुन्धरे।
ये केचिद्यत्र पुरुषा विष्णुचक्राङ्कमुद्रिताः। तेषां
दर्शनमात्रेण महापातकनाशनम्। भूतप्रेतपि-
शाचाश्च डाकिन्यश्च वसुन्धरे। तत्सर्वं प्रशमं या
ति यत्र चक्राङ्कितो वसेदित्यादि ॥ एवं क्षेत्रमाहा
त्म्य एव क्वचिदन्यत्र- वैष्णवलक्षणाभिधानप्र
करणे- स्वगृह्योक्तविधानेन वह्निमाधाय वै बु
धः। चक्राद्यायुधमन्त्रेण जुहुयात्षोडशाहुतीः।

मूलमन्त्रेणसूक्तेन पौरुषेण ततः परम् । जातवेदस मन्त्रेण पश्चादष्टोत्तरं शतम् । हुत्वामहाव्याहृति भिश्चक्रादींस्तत्र तापयेत् । सद्यान् सुत ग्तान् गुरुणा मन्त्रवद्धारयेद्बुधः भुजद्वये शङ्ख चक्रे मूर्ध्नि शार्ङ्ग धनुस्तथा । ललाटे तुगदा धार्या हृदये खड्ग एवच । एवं धार्याणि पञ्चैव विष्णु भक्तै र्मुमुक्षुभिः । अथवा भुजयोश्चक्र शङ्खौ चैवसुलक्षणौ । एवंलाञ्छन युक्ताये भक्ता स्तेवैष्णवा स्मृताः । तैरेवलभ्यंत ब्रह्मसदाचार समन्वितै रित्यादिच ॥१२८॥ एवमन्य दपितत्पुराण गतं वचनजातं तत्र तत्रद्रष्टव्यम् ॥१२९॥ श्रीगारुडपुराणेप्युक्तम् - विष्वक्सेन स्स्वयं चक्रमादायात्म विभूषणम् । प्रयच्छति महातेजाहरिभक्तानुकम्पया । विष्णुचक्राङ्कितं गात्रं पवित्रमितिवैश्रुतिः । चक्राङ्कितायदातव्यं हव्यंकव्यं द्विजोत्तमै रित्यादि ॥ तथा - अग्निनैवतु संयुक्ते चक्रमादायवैष्णवम् । दाहयेत्सर्ववर्णानां हरिसालोक्यसिद्धये इतिच ॥१३०॥ एवमन्य

दपि गारुड पुराणवचनजातं द्रष्टव्यम् ॥१३१॥
वसति मनसि यस्य सोऽव्ययात्मा पुरुषवरस्य न
तस्य दृष्टिपाते । तव गतिरथवा ममास्ति चक्रप्र
तिहतवीर्यबलस्य सोन्यलोक्य इति श्री विष्णुपु
राणे तृतीयांशसप्तमाध्याय गतयमकिङ्करसं
वादवचनञ्च प्रागेवेतिहासप्रकरण उदाहृत
मिह बोद्धव्यम् ॥१३२॥ अस्यायमर्थः - यस्य-
भगवद्दिव्यायुधलाञ्छनधारिणो भगवद्भक्ता
ग्रेसरस्य - मनसि - अव्ययात्मा - व्ययो विश्ले
षः - स न विद्यते यस्य सोऽव्ययः - सन्ततसन्नि-
हितः - आत्मा - निजदिव्यविग्रहो यस्य तथाभू
तः - तदीयभक्त्यतिशयेन तद्विश्लेषासहिष्णुत
यासदासन्निहित इतियावत् - सः - नारायणः-
वसति - पुरुषवरस्य तस्य - दृष्टिपाते - चक्रप्र
तिहतवीर्यबलस्य - तदीयबाहुमूलधृतचक्रचि
ह्नाधिष्ठितसुदर्शनतेजः प्रतिहतवीर्यबलस्य - वी
र्यं प्रतिपक्षनिरसन सामर्थ्यम् - बलं भारव
हनसामर्थ्यमिति भेदोऽवसेयः - तव - अथवा-

मम- गतिः- नास्ति = कथमेतत् - सर्वान्प्राणि
नःस्व लोक मानीय यथापराधंत्वं किलदण्डयि
तु मधिकृतोसि - ईदृशस्य तवाकिलाहं किङ्करो
स्मि - एवंसति तव मम चगतिः कथंप्रतिहन्यते-
इति किङ्कर शङ्कापरिहाराय यमआह - सइत्या
दि - सः - तादृशोभगवद्भक्ताग्रेसरः - अन्यलो
क्यः - अन्यस्य विष्णोरेवलोकार्हः - नमल्लोका
र्हः - यथोक्तलक्षण विष्णु भक्ताग्रेसराणां मु
क्तिस्थान भूतवैष्णव परमपद गामित्वाद्यमलो
कगतिप्रसङ्ग एवनास्तीति नतेषामहं प्रभुरिति
भावइति ॥१३३॥ अयमर्थः - अस्मिन्नेवप्र
करणे - स्वपुरुषमभिवीक्ष्यपाशहस्तं वदतिय
मः किलतस्य कर्णमूले । परिहर मधुसूदन
प्रपन्नान् प्रभुरहमन्य नृणां नवैष्णवानामिति
श्लोकेप्युक्तः ॥१३४॥ बृहद्धारीतस्मृतावष्टमा
ध्यायान्ते - तप्तचक्राङ्कनं विष्णोरेकादश्यामु
पोषणम् । धृतोर्ध्वपुण्ड्रं देहत्वं तन्मन्त्राणांपरिग्र
हइत्यारभ्य - आनृशंस्यंसतांसङ्गः पारमैकान्त्य

हेतवइत्यन्तेन पारमैकान्त्यहेतूनुक्त्वा- वैष्णवः परमैकान्तीनेतरोवैष्णवस्स्मृतइत्युक्त्या तप्तच क्राङ्कनादिलक्षणशालिनः परमैकान्तिन एव वैष्णवत्वावगमात् - पाद्मोत्तरखण्डे प्रथमाध्यायेनारायणेन ब्रह्माणं प्रतितप्तचक्राङ्कनादिलक्षणवैष्णवदीक्षाविधिमुक्त्वा अन्ते- अनेन विधिनामन्त्रं योधीते वैष्णवाङ्कुरोः। ततस्सवैष्णवं याति नान्यथासुरसत्तमे त्युक्त्यापि तादृशस्यैव वैष्णवतासिद्धेः - अतथाविधस्य तदसिद्धेश्च स्पष्टत्वाच्च- प्रभुरहमन्यनृणां नवैष्णवानामित्यत्र वैष्णवशब्देन तप्तचक्राङ्कनादिलक्षणशालिनो भगवद्भक्ताग्रेसरा एव विवक्षिता इत्यवगम्यते ॥१३५॥ अत एवच- चक्रप्रतिहतवीर्यबलस्येत्येतत् - भक्तबाहुमूलधृतचक्रचिह्नसन्निहितसुदर्शनतेजः प्रसरणायत्तयमतत्किङ्करवीर्यबलप्रतिहतिविषयं स्वरसतस्सङ्गच्छते॥१३६॥ भक्तधृतचक्रादिचिह्नेषु दिव्यायुधाधिदेवतासान्निध्यं चदीक्षाविधिशास्त्रसिद्धम् ॥१३७॥

प्रसिद्धश्च भगवद्भक्तेषु यथोक्तलक्षणसततसन्निधानस्य सुदर्शनदेवस्य तद्विरोधिनिरसनोद्यमः ॥१३८॥ अम्बरीषपरिभवोद्युक्तस्य दूर्वाससो निरसनाय तत्सकाशादुत्थाय सुदर्शनदेवः प्रवृत्त इति प्रसिद्धा ह्येषा कथा ॥१३९॥ अत ईदृशसुदर्शनसन्निधानायत्तभीत्यैव च यमेन स्वकिङ्करं प्रति यथोक्तलक्षण उपदेशः क्रियत इति स्पष्टमवगम्यते ॥१४०॥ तथा च यमकिङ्करद्रावणहेतुतयापि भगवद्दिव्यायुधलाञ्छनधारणमावश्यकमित्युक्तवचनसिद्धं भवति ॥१४१॥ श्रीभागवते दशमस्कन्धे पञ्चाशाध्याये उक्तमक्रूरस्तवे - अन्ये च संस्कृतात्मानो विधिनाभिहितेन ते । यजन्ति त्वन्मयास्त्वां वै बहुमूर्त्येकमूर्तिकमिति ॥१४२॥ अस्यायमर्थः - अन्ये च - ते - त्वया - अभिहितेन - विधिना - श्रीपाञ्चरात्रशास्त्रोक्तविधिना - संस्कृतात्मानः - तापः पुण्ड्रस्तथा नाम मन्त्रो यागश्च पञ्चमः । अमी परमसंस्काराः पारमैकान्त्यहेतव इत्याद्युक्ततापादिसं

स्कारसंस्कृतात्मानस्सन्तः - अतएव - त्वन्मयाः - मामेवये प्रपद्यन्ते मायामेतां तरन्तिते = अनन्याश्चिन्तयन्तोमाम् = पुरुषस्सपरः पार्थ भक्त्या लभ्यस्त्वनन्यया = भक्त्या त्वनन्यया शक्यः = इत्याद्युक्तरीत्यात्वदनन्यभक्ताश्चसन्तः - अत्रभगवदनन्यभक्तत्वलक्षणभगवन्मयत्वस्य भगवदुक्तविधिसिद्धसंस्कारहेतुकत्वावगमादनन्यभक्तत्वात्मकपारमैकान्त्यहेतुतयोदाहृतवचनोक्ततापादिसंस्काराएवसंस्कृतात्मशब्देन विवक्षिताः - पाञ्चरात्रशास्त्रेऽमीषामेवसंस्काराणां प्राधान्येनोक्तत्वात् - पञ्चरात्रशास्त्रोपादानपूर्वकं संस्कारविशेषप्रतिपादनपरस्यास्यवचनस्य = ब्राह्मणैः क्षत्रियैर्वैश्यैश्शूद्रैश्चकृतलक्षणैः। अर्चनीयश्चसेव्यश्चपूजनीयश्चमाधवः। सात्वतं विधिमास्थाय गीतस्सङ्कर्षणेनयइति प्रागुदाहृत भीष्मपर्ववचनवदेवदर्शितसंस्कारपरताया आवश्यकत्वाच्च॥ बहुमूर्त्येकमूर्तिकम् - वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धादिरूपेण बहुमूर्तिम् - नारायणरूपेणैकमू

र्तिज्वसन्तम् - त्वांवै - त्वामेव - यजन्तीति ॥१४३॥
एवं तृतीयस्कन्धेप्रथमाध्यायेप्युक्तं विदुर तीर्थया
त्रायाम् - पुरेषु पुण्योपवनाद्रिकुञ्जेष्वपङ्कतोये
षु सरित्सरस्सु । अनन्तलिङ्गैस्समलङ्कृतेषुचचा
रतीर्थायतनेष्वनन्यइति ॥ अन्यानिचेहद्विजदे
वदेवैः कृतानिनानायतनानिविष्णोः । प्रत्यङ्ग
मुख्याङ्कितमन्दिराणियद्दर्शनात्कृष्णमनुस्मर
न्तीतिच ॥१४४॥ अत्रप्रथमश्लोकस्येत्थंविवर
णंबोद्धव्यम् - अनन्यः - अनन्याश्चिन्तयन्तोमां
येजनाः पर्युपासतइत्याद्युक्तरीत्याभगवदनन्य
भक्तोविदुरः - भगवदनन्यभक्तत्वादेवहेतोः -
अनन्तलिङ्गैः - अनन्तस्यविष्णोर्लिङ्गानिश्रीमत्सु
दर्शनादिदिव्यायुधचिह्नानियेषुते - अनन्तलिङ्गाः -
प्रतिद्विष्णोअजच्चक्रेसुतप्तेजन्माध्वोधितर्तवे
चर्षणीन्द्राः । मूलेवाहोर्दधतेन्येपुराणालिङ्गान्य
ङ्गैतसायुधान्यर्पयन्तइत्यादिश्रुत्युक्तरीत्यानम
सुदर्शनादिभगवद्दिव्यायुधचिह्नाङ्किताभक्ता
स्तैसरा - तैस्समलङ्कृतेषु - परमैकान्त्यधिष्ठिते

षु-तीर्थेष्वायतनेषुपुरादिषुच-चचार-भगवदन
न्य भक्तानां परमैकान्तिभावभाजां देवतान्तर तद्भ
क्ताधिष्ठित तीर्थायतनादिषुगमन प्रसङ्गाभावात्प
रमैकान्त्यधिष्ठित तीर्थायतनादिष्वेवपरमैकान्ती
विदुरोयात्रांचकारेति भावः-अनन्यइति विशेषणं
च परमैकान्तिलक्षण भगवद्भक्ताग्रेसर सम्बन्धि
तीर्थायतनैकानुवर्तित्वहेतुगर्भमवधेयमिति॥२४५
द्वितीयश्लोकस्येत्थं विवरणं बोध्यम्-अस्मिन्
श्लोके पूर्वश्लोकात्-स आसिषेवे-इतिकर्तृ
क्रियापदे अनुवर्तेते-सः भगवदनन्य भक्तो वि
दुरः। इह-सरस्वत्याम्-अन्यानि-द्विजदेवदे
वैः-द्विजेषुयेदेवाः-भगवद्दिव्यायुधलाञ्छन
धारणेन लब्धदेवसञ्ज्ञाः परमैकान्तिनः-येच
देवाः-इन्द्रादयः प्रसिद्धाः-तैः कृतानि-म
नुष्येषु भगवद्दिव्यायुधलाञ्छन धारिभिः परमै
कान्तिलक्षणे भगवद्भक्ताग्रेसरैर्दैवैश्च प्रतिष्ठा
पित दिव्यायतनानामेव भगवत्सान्निध्यविशेष
वत्त्वात्तेषामेव परमैकान्तिभिरभिगन्तव्यत्वाच्चे

तिभावः - श्रीविष्णुतत्वसंहितायां तृतीयपादेप्र
थमेपटले - एवं विज्ञापिता शिशिष्याश्चक्रलिङ्ग
समन्विताः। देवाएव भवन्त्येते नान्येषांकर्म
कारकाइति ॥ नवमे पटले - संस्कार व्याञ्जिता
त्मानः पतिचिह्नेनलाञ्छिताः ॥ देवाभिधान
वन्तश्चत्यक्तास्पद परिग्रहाः। तमेवसर्वभावे
नसंप्रयान्तु महामुनइतिचवचनात् - अनायु
धासो असुरा अदेवाइतिवैश्रुतिरितिवृद्धहा-
रीतस्मृत्या प्युदाहृत श्रुति विशेषात् - प्रागुदा
हृत प्रमाणांतरेभ्यश्च चक्रादि भगवद्दिव्या
युधलाञ्छन धारिपरमैकान्तिसाञ्ज्ञित भगव
द्भक्ताग्रेसराणां देवसञ्ज्ञा हि प्रसिद्धा - श्रोत्रि
यो विष्णु भक्तस्तु गृहस्थश्शास्त्रवित्तमः। च
क्रलिङ्गधरोविप्रः प्रतिष्ठांकर्तुमर्हति। तेनप्र
तिष्ठितस्तत्र सन्निधत्तेसदाहरिः। देवतांतर भक्तोवा
समबुद्धिरथापिवा। नास्तिकोवेदहीनोवा नप्रति
ष्ठां समाचरेदिति पराशार संहिता वचनादिभिः
परमैकान्ति प्रतिष्ठापित दिव्यायतनेष्वेव भगव

त्सान्निध्यविशेषोऽन्येषां प्रतिष्ठाकर्मण्यनधिका-
रश्च प्रत्यपादिषाताम् = वर्ज्याः पाषण्डशैवाद्यैः
स्थापितास्च तथाऽर्चिताः । अन्यत्रचस्वतो बद्धा
नियमा स्सर्वदेवताइति भरद्वाजसंहितावचनेन
भगवदायतनेषु परमैकान्त्यन्य मनुजप्रतिष्ठा
पित्तार्चित भगवदर्चा मूर्तीनाम् - अन्यत्रापिच
भगवदन्य बद्ध देवतार्चा मूर्तीनांच नियमात्परमै
कान्तिभिर्वर्जनीयता हि प्रतिपाद्यते - एवमिदं
सर्वं भगवद्धर्मशास्त्रेषुसमन्ततः प्रसिद्धम् - अत
एवच विदुरस्यापि परमैकान्ति भागवतस्यै दृश-
आचार इहदर्शितः - विष्णोर्नानायतनानि - प्र
त्यङ्ग मुख्याङ्कितमन्दिराणिच - प्रत्यङ्गम् - अ
ङ्गमङ्गंप्रति - मुख्यानि प्रतिनियतानि भगवद्दि-
व्यायुधचिह्नानि - आचार्यस्त्वय मादाय नियुक्तो
वाथमन्त्रवित् । प्राङ्मुखस्योपविष्टस्य न्यसेद्बाहो
तु दक्षिणे । सुदर्शनं तथावामे पाञ्चजन्यंस्वमन्त्र
तः । एवंगदांधनुःखङ्गं ललाटे मूर्ध्नि वक्षसीति भ
रद्वाजसंहिता परिशिष्टद्वितीयाध्यायेवचनादि

भिर्विहितानि दक्षिणसव्यबाहुललाटमूर्धवक्षो रूपतत्तदङ्गप्रतिनियतचक्रशङ्खगदाधनुःखड्ग रूपतत्तद्भगवद्दिव्यायुधचिह्नानीतियावत्-प्रत्यङ्गमुख्यत्वं तत्तदङ्गविशेषप्रतिनियतत्वमितिफलितम्-तैरङ्किताः-यद्वा-अङ्गे अङ्गे-प्रत्यङ्गम्-भगवल्लाञ्छनधारणस्थानतयाशास्त्रचोदिताङ्गेषुसर्वत्र-मुख्याङ्किताः-तापसंस्कारायत्तस्थिररूपदिव्यायुधचिह्नधारिणः-चन्दनाद्यायत्तचक्रादिचिह्नानां जलाद्यपनोद्यत्वे नास्थिरतया तादृशचिह्नशालिनां गौणाङ्कितशब्दव्यपदेशार्हतया तद्भावृत्त्यर्थं मुख्याङ्किताइत्युच्यते-पक्षद्वयेपि चक्रादिभगवद्दिव्यायुधलाञ्छनधारिणः परमैकान्तिसञ्ज्ञिता भागवताग्रेसराइह विवक्षिताः-तेषाम्मन्दिराणि गृहाणि च-आसिषेवे-आसमन्तादसेवत-भगवद्दर्शनार्थं भगवद्दिव्यायतनानि परमैकान्तिसञ्ज्ञितभागवताग्रेसराणां दर्शनार्थं तदीयश्रीमद्गृहाणि चोपससादेतिभावः-श्रीशाण्डिल्यस्मृतौ चतुर्थाध्या

ये–यत्र भागवता नित्यं पञ्चकाल परायणाः–निव
सन्तिसदायुक्तास्तत्क्षेत्रं नैमिषाद्वरम्–यत्रचैका
न्तिनो नित्यंस्नानपानार्चनादिकम्। कुर्वन्ति तज्जलं
ज्ञेयंसुतीर्थं पुष्करादपि। निवसन्ति महात्मानोयत्र
चैकान्तिनो द्विजाः। देवादेवर्षयो नित्यं तं देशं पर्युपा
सत इतिवचनैः परमैकान्तिनांस्थानानि तत्सेवितानि
तीर्थानिच परमपावनत्वेन देवाद्युपास्यत्वेन चात्य
न्तमादरणीयानीति ह्युच्यते–अतएवच विदुरः
परमैकान्तिनामेवसम्बन्धीनि भगवदायतनानित
त्सेवितान्येवच तीर्थादीनि तदावासस्थानान्येवच
विशेषत उपससादेत्युच्यते–भगवद्भक्तानां गृहो
पसदनं किमर्थमित्यत्राहयद्दर्शनादित्यादि–ये
षां भगवद्भक्ताग्रेसराणांदर्शनात्कृष्णमनुस्मरन्ति
द्रष्टारः–येषांदर्शनेतद्गत भगवत्सम्बन्धित्वाभि
व्यञ्जक शङ्खचक्रोर्ध्वपुण्ड्रादिचिह्नान्यभिवीक्ष्य–
इमे भगवतो नारायणस्य दासा वैष्णवाइति भगव
दनुस्मरणंद्रष्टृणामवश्यंभवति–तेषांम्महात्मना
मुपसदनमवश्यंकर्तव्यमिति भावइति ॥ १४६ ॥

यत्तु नरिहृ श्रीधरकृत मन्यथाव्याख्यानम्- तद्वेष्णवशास्त्रमर्मानभिज्ञतादि निबन्धनं स्वरसतश्शदा लभ्यं चेत्यनु पादेयमभिज्ञैः ॥१४७॥ तथाहि - अत्र प्रथमश्लोके - अनन्तलिङ्गैरिति पदम्- अनन्तस्य लिङ्गैः मूर्तिभिरिति भगवन्मूर्तिपरं व्याख्यातम्- नहि लिङ्गपदस्य मूर्तिवाचकता क्वचित्प्रसिद्धा- पूर्वोदाहृत भगवद्धर्मदीक्षापरश्रुतौ- मूले बाह्वोर्दधतेन्ये पुराणा लिङ्गान्यङ्गे तसायुधान्यर्पयन्तइत्युक्तरीत्या भगवद्भक्त प्रकरणानुगुण्येनच भगवद्दिव्यायुधचिह्नपरता हि स्वरसवाहिनी - पूर्वश्लोके - तीर्थपदः पदानीति- स्वधिष्ठितो यानिसहस्र मूर्तिरितिच भगवद्दिव्यायतनानुवर्तनस्योक्तत्वेनास्मिन् श्लोके भगवद्भक्तसम्बन्धितीर्थायतनानुवर्तनमेवाभिधीयत इतिस्वरसतोवगम्यते-तदनुवर्तनस्याप्यावश्यकतायाः प्रागुदाहृतप्रमाणसिद्धत्वादत्रापि द्वितीयश्लोके तदभिधानदर्शनाच्च- किञ्च- अनन्तलिङ्ग शब्दस्य भगवन्मूर्तिपरत्वे- तीर्थायतनेष्वित्यत्रतीर्थपदं व्यर्थमस

ङ्गतार्थंच - साक्षात्तीर्थवनाद्रिकुञ्जादिस्थानेष्वा
यतनमन्तरेण भगवन्मूर्त्यधिष्ठानस्याशास्त्रीयत्वा
दाचारासिद्धत्वादायतनावश्यकत्वे चायतनशब्देनै
व तत्सङ्ग्रहसम्भवे तीर्थपदस्यानावश्यकत्वाच्च -
भगवद्भक्तपरत्वे तु तदधिष्ठिताश्रमविषयतयाती
र्थादयश्शब्दास्सुसङ्गताः। अनन्यशब्दस्याप्येकाकि
परतयाव्याख्यानं नस्वारसिकम्। अनन्याश्चिन्त
यन्तो माम् ॥ भक्त्यालभ्यस्त्वनन्यया ॥ भक्त्यात्व
न्यया शक्यः ॥ इत्यादिष्विवात्रापि भक्तप्रकर
णेऽनन्यभक्तपरताया एव न्याय्यत्वात् - एवम
स्मिन् प्रकरणे विदुरस्य - महादरपूर्वक महाभाग
वतोद्धवसमागमस्य - तं प्रति भगवत्सम्बन्धपुर
स्कारेणैव तत्तत्कुशलप्रश्नकरणसमयेऽनन्यभ
क्तस्याक्रूरस्य - अपिस्विदन्येच निजात्मदेवम
नन्यवृत्त्यासमनुव्रता ये। हृदीकसत्यात्मजचा
रुदेष्णगदादयस्स्वस्तिचरन्तिसौम्य स्विस्मिन्लो
केऽन्येषामनन्यभक्तानांच विशेषाकारेण कुश
लप्रश्नकरणस्य च दर्शनेन तदानुगुण्येनापि तत्पर

तायाएवयुक्तत्वाच्च - अनन्तलिङ्गैरित्यस्यदेवतां
न्तरपरताप्यतएवहेतोर्नशङ्कितुंयोग्या - पूर्वश्लो
के - तीर्थपदः पदानीति - स्वाधिष्ठितोयानिसहस्र
मूर्तिरितिच श्री विष्णुसेवार्थयात्रायाएवोपक्रमा
त - उत्तरश्लोकेव्रतानिचेरे हरितोषणानीत्युप
संहारदर्शनात् - द्वितीयश्लोके - नानायतनानि
विष्णोरित्याद्युक्तिदर्शनाच्चेहदेवतान्तरप्रसङ्ग
स्यानवकाशत्वाच्च - एतेन - पूर्वश्लोके सहस्रमू
र्तिरित्यस्य - बहु मूर्त्येक मूर्तीक मित्या
दिस्थलान्तरोक्त व्यूह विभवाद्यनन्त भगवदव
तार मूर्तिप्रसिद्धि मुपेक्ष्य ब्रह्मरुद्राद्यनेक मूर्ति
मत्तया भगवत्परत्ववर्णन मपिश्रीधरस्यवैष्णा
वशास्त्रमर्मानभिज्ञत्वस्वमतानुगुणविरुद्धवा
सनादिमूलमित्युपेक्षणीयमेवविशेषज्ञैः -
एवंद्वितीयश्लोके - द्विजदेवैः ऋषिभिरि-
ति व्याख्यानममूलकम् - क्वापि द्विजदेवश
ब्देन ऋषीणांनिर्देशादर्शनात् - नानायतना
निविष्णोरित्यत्रायतनशब्दस्यैवस्वतोभग

वन्मन्दिरपरस्यसतः प्रसह्यक्षेत्रपरत्वमाश्रित्यप्रत्य
ङ्मुख्याङ्कितेत्यादिपदस्यस्वतन्त्रविशेष्यपरतया
स्फुटंप्रतीयमानस्य - अङ्गमङ्गंप्रतिवर्तन्तइतिप्र
त्यङ्गान्यायुधानि - तेषुमुख्यंचक्रम् - तेनाङ्कितानि
मूर्धन्यकुम्भेषुचिह्नितानिमन्दिराणियेषुतानी
तिबहुव्रीहिसमासेनक्षेत्रविशेषणपरतयाव्याख्या
नमप्यसङ्गतम् - आयतनपदस्यक्षेत्रवाचकतायाः
क्वाप्यप्रसिद्धत्वात् - भगवदालयादेर्हिजदेवदेव
कृतत्वसम्भवेपिक्षेत्रस्यतत्कृतत्वासम्भवेनान्व
यासाङ्गत्यात् - प्रत्यङ्गपदस्यायुधपरतयाक्वापि
प्रयोगादर्शनात् - आयुधानांप्रायशोबाहुप्रति-
नियतस्थितीनांप्रत्यङ्गंवर्तमानत्वाभावाच्चरू
ढ्यायोगेनवाऽऽयुधानांप्रत्यङ्गपदबोध्यत्वास
म्भवेनप्रत्यङ्गमुख्यशब्देनचक्रबोधासम्भवात् -
प्रागुक्तरीत्याव्याख्यानस्यैवस्वारसिकत्वाच्च -
तस्मादत्रत्यश्रीधरीयव्याख्यानंवैष्णवशास्त्रम
र्मानभिज्ञतामूलंस्वमताभिनिवेशकारितंचेत्यनु
पादेयमेवेतिसिद्धम् ॥ १४० ॥ एवमेकादशस्कन्धे-

एकादशाध्याये- साधुस्तवोत्तमश्लोकमतःकीदृ ग्विधः प्रभो। भक्तिस्त्वय्युपयुज्येत कीदृशीसद्भि रादृतेतिश्लोकेन= लोकेस्वस्वरुचिभेदेननाना विधाभक्तादृश्यन्ते- हेउत्तमश्लोक- पावनयश श्चरित्र-प्रभो- भक्तिफलदातृभूतस्वामिन्- कीदृग्विधः- कीदृशप्रकारः-साधुः- भक्तःतव- मतः- सम्मतः- सद्भिः- भक्तैः- आदृताकीदृ शीभक्तिः- त्वय्युपयुज्यते- त्वत्प्रसादनपर्याप्ता पर्यवस्यति- तत्तत्त्वंभक्तिफलप्रदातुस्स्वामिन स्तवैवमुखाच्छ्रुत्वातथाचरितुमिच्छामि- न खलुस्वाम्यसम्मतवर्त्माभक्तोभक्तिश्चकृतार्थी भविष्यतइत्यभिप्रायेणपृच्छन्तमुद्धवंप्रति समादधताभगवता- ज्ञात्वाज्ञात्वाथयेवैमांयाव न्यश्चास्मियादृशः- भजन्त्यनन्यभावेनतेमे भक्ततमामताइति स्वसम्मतभक्तस्वरूपमुक्त्वा स्वप्रसादनपर्याप्तभक्तिस्वरूपोसत्तिसामग्रीवर्ण यताऽभिहितम्-मल्लिङ्गमद्भक्तजनदर्शनस्प र्शनार्चनमिति = वैदिकीतान्त्रिकीदीक्षामदीय

व्रतधारणमितिच ॥१४९॥ इदमत्रावधेयम्- अन
न्यभावेनभजतामेव भगवतास्वाभिमतभक्तत्व
मभिहितम्- अनन्यभावश्चतापादिपञ्चसंस्का
रायत्तंपारमैकान्त्यमेवेति प्रागेवासकृदावेदितम्-
मल्लिङ्ग मद्भक्त जनेत्यत्र- ममलिङ्गानिचक्रादि
दिव्यायुध चिह्नानियेषुतादृशामद्भक्त जनाइतिव्युत्प
त्त्याभगवद्दिव्यायुधलाञ्छितपरमैकान्तिलक्षण
भागवताग्रेसराएवविवक्षिताः- तान्त्रिकीदीक्षे
त्यत्रापिश्रीपञ्चरात्रसंहिताप्रसिद्धातापादिपञ्च
संस्कारलक्षणवैष्णवदीक्षैवच विवक्षिता- इत्थं
च- तापादिपंचसंस्कार लक्षणश्रीपाञ्चरात्रादि
प्रसिद्धवैष्णवदीक्षापूर्वकं क्रियमाणा भक्तिरेव
मत्प्रसादनपर्याप्ता भवतिनान्यादृशीति भक्ति
प्रश्नस्याप्युत्तर मुक्तं भवति- यत्तु- मल्लिङ्गेत्य
त्र- लिङ्गानिप्रतिमादीनीतिव्याख्यानम्- तद
पिप्रागुक्तरीत्यावैष्णवशास्त्रमर्मानभिज्ञतादिमू
लमेवेति ॥१५०॥ एवमेकादशस्कन्धेषड्विंशाध्या
येपिभगवतोक्तम्- मल्लक्षणमिमंकायंलब्ध्वा

मद्धर्मआस्थितः । आनन्दं परमात्मानमात्मस्थं समुपैति मामिति ॥१५१॥ मल्लक्षणम्-ममलक्षणानि-चक्रादिदिव्यायुधचिह्नानियस्मिंस्तथाभूतम्- दिव्यायुधलाञ्छितम्- कायंलब्ध्वा-मद्धर्मे भक्तियोगरूपे- आस्थितः- आसमन्तात् स्थितः-सम्यगनुष्ठानकुशलः- पुरुषः-यद्वा- आस्था ऽस्यसञ्जाते त्यास्थितः -सञ्जातदृढानुरागः पुरुषः- अत्र मल्लक्षणंकायंलब्ध्वामद्धर्मआस्थितइत्युक्त्या चक्रादिभगवद्दिव्यायुधलाञ्छनधारणं विना भगवद्धर्मप्रवेशाधिकारएवनास्तीतिप्रागुदाहृतप्रमाणजालसुप्रसिद्ध एवार्थः प्रतिपादितोवगम्यते- अतएवह्युक्तं श्रीभागवतमाहात्म्येपि-सप्ताहव्रतिनांपुंसां नियमान्शृणुनारद, विष्णुदीक्षाविहीनानां नाधिकारःकथाश्रवइति- आनन्दम्- आनन्दयितारम्- परमानन्दलक्षणमोक्षजनकम्- आत्मस्थम्- सर्वात्मसु नियन्तृतयासदैवसन्निहितम्-परमात्मानम्माम् समुपैति- निरतिशयानन्दजनकपरमात्मप्राप्तिलक्षणां

मोक्षंप्राप्नोतीतियावदिति विवरणमस्यबोद्धव्यम्
॥१७२॥ यत्तु-मल्लक्षणम्-मत्स्वरूपंलक्ष्यतेयेनत
मिममितिव्याख्यानम्-तदप्युक्तरीत्यावैष्णवशा-
स्त्रमर्मानभिज्ञतास्वमताभिनिवेशादिमूलमित्यनु
पादेयम्-अनन्तलिङ्गैरित्यत्र मल्लिङ्गमद्भक्तजने
त्यत्रच लिङ्गशब्दस्य-मल्लक्षणमिमंकायमित्यत्र
लक्षणशब्दस्यच चिह्नवाचकपर्यायशब्दतया-ब्राह्म
णैः क्षत्रियैर्वैश्यैश्शूद्रैश्च कृतलक्षणैः-अर्चनी
यश्चसेव्यश्चपूजनीयश्चमाधवः-सात्वतंविधि-
मास्थायगीतस्सङ्कर्षणेनयइत्यादिप्रागुदाहृतभी
ष्मपर्ववचनाद्यानुगुण्येन श्रीपाञ्चरात्रादिप्रसिद्ध
भगवद्धर्मदीक्षाङ्ग भगवद्दिव्यायुधचिह्नपरतायां
सर्वत्रैकरूपतया सम्भवन्त्यां स्वारसिकार्थप्रहाणे
नस्थलभेदेन भिन्नरूपेण क्लिष्टार्थग्रहणेकारणा
भावात्-अक्रूरस्तुतिप्रकरणेऽस्मिन्नेवग्रन्थे-
अन्येचसंस्कृतात्मानो विधिनाभिहितेनते-इ-
त्यत्र-अनुपदोदाहृते-वैदिकीतान्त्रिकीदीक्षे
त्यत्रच-भगवदभिहितपञ्चरात्रशास्त्रसिद्धसं

स्कारविशेषाणां स्पष्टमभिहितत्वेन तदभिप्रा
यकतायाउक्तस्थलेषुस्वरसतः प्रतीयमानायाः
परित्यागस्याग्रहैकमूलतायास्स्पष्टत्वाच्च ॥१५३॥
एवं नारदीयपुराणेप्युक्तम्- श्रीकृष्णशस्त्राङ्कवि
हीनगात्रस्स्मशानतुल्यः पुरुषोथनारी। दृष्ट्वान
रंतंनृपतेसवासास्स्नात्वासमर्चेद्धरिमङ्गनित्य
मिति ॥ चक्राङ्कितस्यसांनिध्येयत्कर्मकुरुते
नरः। स्नानंदानंतपोहोमं तत्सर्वंचाक्षयंभवे
दितिच ॥१५४॥ एवमन्यत्रापिसात्विकपुराणे
ष्वेवंजातीयकानिवचनानिद्रष्टव्यानि ॥१५५॥
ब्रह्माण्डपुराणेश्रीविष्णुरहस्ये प्रथमेऽध्यायेन्वे
ष्यावामुनयः पुण्याविष्णुलक्षणलक्षिताः। ध्यायि
नोयोगनिरतास्सदाविष्णुपरायणाइति= अथ
त्रिंशोऽध्याये- श्रावकावासुदेवस्यतथैवनटन
र्तकाः। अन्येचवैष्णवास्तत्र सर्वेचक्रेणला-
ञ्छिताइतिचोक्तम् ॥१५६॥ एवंतत्रैवमोक्षध
र्मे- उमामहेश्वरसंवादे वैष्णवमाहात्म्यं पृच्छन्त्यै
पार्वत्यै महादेवप्रतिवचनमयषष्ट्पञ्चाशाध्या

योऽमुमर्थप्रपञ्चेन प्रतिपादयति = कैलास शि
खरे देवी देवदेवम्महेश्वरम् । प्रणम्य शिरसा शम्भुं
पार्वती वाक्यमब्रवीत् ॥१॥ देव्युवाच ॥ सर्वज्ञ
स्त्वं जगत्साक्षी चराचर गुरुः पिता । सर्वलोकेश्वर
स्साक्षात्सृष्टिस्थित्यन्तकारकः ॥२॥ वैष्णवानांच
माहात्म्यं श्रोतुमिच्छामि शङ्कर ॥ ईश्वर उवाच ॥
साधु साधु महादेवि साधूनांच हितैषिणि ॥३॥ वैष्ण
वानांच माहात्म्यं तववक्ष्यामि सुव्रते । शङ्खचक्राङ्कि
तं भक्त्या यः पूजयति मानवः ॥४॥ स साक्षाद्विष्णु
सामीप्यं लभते नात्र संशयः । विष्णुचक्राङ्कितं विप्रं
यो भूम्यामभिवादयेत् ॥५॥ ललाटे पांसु सङ्घं
ब्रह्मलोके महीयते । विष्णुचक्राङ्कितं दृष्ट्वा योऽभ्यु
त्थाय कृताञ्जलिः ॥६॥ स स्वीयं कुलमुद्धृत्य स्व
र्गलोके महीयते । चक्राङ्कितभुजा यस्यां पङ्क्तौ म
ध्ये तु भुञ्जते ॥७॥ सा पङ्क्तिर्देवलोकस्य देवपङ्क्ति
षु पूज्यते । आष्टक्ये मासिकेचापि भोजयेच्चक्र
लाञ्छितम् ॥८॥ रौरवात्कुलमुद्धृत्य विष्णुलो
के महीयते । सगोत्रमपि यश्श्राद्धे भोजयेच्चक्रला

ञ्छितम् ॥९॥ समाक्षाद्विष्णुसामीप्यं पित्रादीना
त्मनानयेत्। शङ्खचक्राङ्कितं दृष्ट्वा यो नरो मुदितो
भवेत् ॥१०॥ परमानन्दमाप्नोति किं पुनस्त्वैहिकं
फलम्। चक्राङ्कितस्य नामानि यो वदेद्भक्तिमान्न
रः ॥११॥ सर्वपापविनिर्मुक्तस्स याति परमं पदम्।
चक्राङ्किताय विप्राय योन्नं भक्त्या ददाति सः॥१२॥
अब्दसङ्ख्यानि वर्षाणि ब्रह्मलोके महीयते। विष्णुभ
क्तस्य विप्रस्य चक्रचिह्नस्य मानवः ॥१३॥ गोक
र्णमात्रां भूमिं दत्त्वा राज्यमवाप्नुयात्। विषुवा
यनकालेषु चक्रचिह्नाय पार्वति ॥१४॥ तिलद्रो
णमहादानम्महापातकनाशनम्। विष्णुचक्रा
ङ्कितं विप्रं गन्धपुष्पादिभिर्नरः ॥१५॥ पूजयि-
त्वा महादेवि विष्णुसायुज्यमाप्नुयात्। विष्णुच
क्राङ्कितं विप्रं विष्णुमूर्तिमिव स्मरेत् ॥१६॥ सो
पि विष्णुमयो भूत्वा वैष्णवीं गतिमाप्नुयात्। अ
ग्निना तप्तचक्रेण बाहुमूले भिलाञ्छिताः॥१७॥
सर्वपापानि सन्तीर्य स्वराजस्ते भवन्ति च। विष्णु
स्थानेषु मुख्येषु ये विप्राश्चक्रलाञ्छिताः ॥१८॥

तेहि विष्णुमया भूत्वा विष्णुसायुज्यमाप्नुयुः । विष्णु
चक्राङ्कितायत्रवसन्ति नरपुङ्गवाः ॥१९॥ तद्देशो
सन्नवस्तूनि वैष्णवत्वं लभन्ति च । विष्णुचक्राङ्कि
तं विप्रमेकरात्रिं तु वासयेत् ॥२०॥ सस्वर्गवासि
भिश्शश्वत्पूज्यएव नसंशयः । अभ्यञ्जनादिभु
क्तयन्तं यः करोति स मानवः ॥२१॥ चक्राङ्किता
य विप्राय विष्णुसामीप्यमाप्नुयात् । चक्राङ्किता
य विप्राय कन्यादानं करोति यः ॥२२॥ परमानं
न्दमाप्नोति वैष्णवं पदमुत्तमम् । यस्मिंस्तीर्थे कृत
स्नाना वैष्णवाश्चक्रलाञ्छिताः ॥२३॥ तस्मिन्
स्नानं प्रकुर्वीत विष्णुलोकमवाप्नुयात् । अतिपाप
प्रसक्तोपि विष्णुचक्राङ्कितस्य तु ॥२४॥ पादोद
कं पिबेत्सद्यस्सर्वपापैः प्रमुच्यते । पादौ पवित्रभू
तौ हि विष्णुचक्राङ्कितस्य तु ॥२५॥ यः प्रक्षाल्य
पिबेत्तोयमात्मशुद्धिं करोति सः । चक्राङ्किताय
महते विष्णुभक्ताय धीमते ॥२६॥ भिक्षामात्रप्र
दानेन वैष्णवीं गतिमाप्नुयात् । चक्राङ्किताय म
हते महादेवि महात्मने ॥२७॥ शाकमात्रप्रदानेन

मुक्तिं यान्ति हि सूरयः। चक्राङ्कितं द्विजवरं योद्
षयति मानवः ॥२८॥ स चाण्डालो महादेवि रौरवं
नरकं व्रजेत्। ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः
॥२९॥ चक्राङ्कितस्य निन्दा च पञ्चैते त्वतिपात
काः। यः पुत्रः पितरं द्वेष्टि तं विद्यादन्यरेतसम् ॥३०॥
चक्राङ्कितं तु यो द्वेष्टि तं विद्यादन्यरेतसम्। किम
त्र बहुभिर्धर्मैः किमत्र बहुभिर्धनैः ॥३१॥ किमत्र
बहुभिर्भोगैः प्राकृतस्य दुरात्मनः। किमत्र बहुभिः
शास्त्रैः किमत्र बहुभिः श्रुतैः ॥३२॥ अवैष्णवानां
तपसा किमृषीणां फलं भवेत्। तीर्थस्नानम्महादे-
वि महादानफलं तथा ॥३३॥ अवैष्णवस्य विप्रस्य
सर्वं शाश्वद्विनश्यति। यथा दारुमयो हस्ती यथा चर्म
मयो मृगः ॥३४॥ यथा भस्ममयो वह्निस्तथा विप्रो
ह्यवैष्णवः। अवैष्णवस्य विप्रस्य कर्म व्यर्थं भविष्य
ति ॥३५॥ रूपलावण्यसंयुक्ता महावंशोद्भवा द्वि
जाः॥ अवैष्णवा न शोभन्ते निर्गन्धा इव किंशुकाः
॥३६॥ शरीरशोषणं व्यर्थं कृच्छ्रचान्द्रायणादि-
भिः। विष्णुपादाम्बुजध्यानहीनस्य पुरुषस्य च ॥३७॥

विद्याविनयसम्पन्नोविशालकुलसम्भवः। विष्णु
भक्तिविहीनोयश्चण्डालसदृशोभवेत् ॥३८॥ अवैष्ण
वोदुराचारः पापानामाकरोऽशुचिः। पापचारीदुरात्मा
चतस्मात्तंपरिवर्जयेत् ॥३९॥ अवैष्णवस्यसंसर्गो
दौर्ब्राह्मण्यंकरोतिहि। तस्मात्प्राकृतसंसर्गंवर्जये
द्वैष्णवोनरः ॥४०॥ यस्मिन्देशेदुरात्मानः प्राकृताः
पापचारिणः। वसन्तिज्ञानसम्मूढास्तंदेशंपरिव
र्जयेत् ॥४१॥ शिखायज्ञोपवीतंच चक्रचिह्नंचकु
ण्डले। ऊर्ध्वपुण्ड्रंचदण्डंच पवित्रंचकमण्डलुः॥४२॥
एतानिविप्रैर्धार्याणि शुक्लदन्तैर्दृढव्रतैः। वैष्णव
स्यचविप्रस्य विष्णुभक्तस्यधीमतः ॥४३॥ अन्त
र्बहिर्वस्तुसर्वंव्याप्यनारायणः स्थितः। यस्योदरे
भवेद्वैविवैष्णवस्यमहात्मनः ॥४४॥ प्राकृताभं
प्रकुरुते तस्यप्राकृतलक्षणम्। तस्मात्प्राकृत
संसर्गं वर्जयेद्वैष्णवोनरः ॥४५॥ प्राकृतान्नंविशा
लाक्षि विशेषेण विवर्जयेत्। इदंचरित्रंपापघ्नंपु
ण्यंदुस्स्वप्ननाशनम् ॥४६॥ पठतांशृण्वतांवापि
विष्णुसारूप्यमावहेदिति ॥१५७॥ अन्नहितम

चक्राङ्कितानां परमैकान्तिसंज्ञितानाम् भागवताग्रे
सराणा म्महाप्रशंसापूर्वकं तदितरेषां सर्वेषां प्राकृ
तसंज्ञिता नांसंसर्गान्नस्वीकरणादिकं तेषां प्रच्यु
तिहेतु तयावर्जनीय मितिचोक्तम् ॥१५८॥ ब्रह्मवै
वर्तपुराणे- चक्राङ्कितभुजंविप्रंयस्तु निन्दतिस
र्वदा। सयाति नरकं घोरं यावदाभूतसंप्लुव मित्युक्त
म् ॥१५९॥ भविष्यपुराणेप्युक्तम् - चक्राङ्कित
भुजंदृष्ट्वा यस्तुष्टान्नाभिवादयेत् । तिर्यग्योनिश
तं प्राप्य विष्ठायां जायते क्रिमिरिति ॥ तत्रैवक्षेत्र
माहात्म्ये विष्णुभक्तलक्षण प्रकरणे- यस्यचक्रप्र
भावेनदग्धावाराणसीपुरी । यस्य शङ्खध्वनिंश्रुत्वा
विद्रवन्त्यसुरादयः ॥ तद्भक्तलक्षणं वक्ष्ये शृणु मा
तस्स विस्तरम् । वेद शास्त्रपरायेच स्वधर्माचरणे
रताः । वेदोक्तं कर्म कुर्वन्ति तान् भक्तान्विद्धिवै
ष्णवान् । शङ्ख चक्राङ्कितायेचाप्यूर्ध्वपुण्ड्रधरा
श्चये । नासत्यवचनायेतु पितृमातृमतेस्थिताः ।
ते भक्तालक्षणन्त्वेतत्तं विनाकोनुजीवतीतिच ॥१६०॥
वामनपुराणेप्युक्तम् - लीलयापि लिखेद्यस्तुबाहु

मूले सुदर्शनम् । कुलकोटिं समुद्धृत्य स गच्छेत् परमं पदमिति ॥१६१॥ मात्स्यपुराणेऽप्युक्तम्— चक्राङ्कितभुजाः केचिच्छङ्खाङ्कितभुजास्तथा । शङ्खचक्रधराः केचित् कुले विष्णुपरिग्रहे । शङ्खचक्राङ्कनं कुर्यादात्मनो बाहुमूलयोः । कलत्रापत्यभृत्येषु पश्वादिषु च मुक्तये । मच्चक्राङ्कितदेहो यो मद्भक्तो भुवि दुर्लभः । नैवाप्नोति वशम्मृत्योरप्याज्ञाभङ्गकृन्नर इति ॥१६२॥ आग्नेयपुराणेऽप्युक्तम्— पञ्चायुधानि धार्याणि भक्तिश्रद्धोपबृंहितैः । ललाटे मूर्ध्नि हृद्बाह्वोरेकैकं पृथक् पृथक् । ललाटे तु गदा धार्या मूर्ध्नि चापस्ततः परम् । नन्दकं चैव हृन्मध्ये शङ्खचक्रे भुजद्वये । तानि कृत्वा च विधिवत् पञ्चायुधविधानतः । तत्तन्मन्त्रेण मन्त्रज्ञः प्रतिष्ठाप्य पृथक् पृथक् । वह्निमध्ये समारोप्य विधिवत्पूजयेत्पुनः । अङ्कयेद्विधिवद्ब्रह्मन् प्रमत्तस्समाहितः । वर्णाश्रमेषु निष्ठानामन्येषां चाविशेषतः । कर्तव्यं भगवद्भक्तैर्य सिद्धै मुक्त्यै च सर्वदा । चक्रादिधारणं ब्रह्मन् विष्णुलोके महीयत इति ॥ तत्रैव स्थलान्तरे— शिलाचु

ङ्किः कृताकिंवाप्रतिमायांहरेर्मया-किम्मयापथिदृ-
ष्टस्य विष्णुभक्तस्यकर्हिचित्। तन्मुद्राङ्कितदेहस्य
चेतसानादरःकृतः तेनकर्मविपाकेन पुत्रशोकोम
मेदृशइतिच ॥१६३॥ लैङ्गेप्युक्तम्- अष्टाक्षर
विदस्सर्वे विष्णुचक्राङ्कितास्तथा। श्रावकावासु
देवस्य तथैवनटनर्तकाः। अन्येचवैष्णवास्तत्रस
र्वेचक्रेणलाञ्छिताइति ॥१६४॥ स्कान्देयम
वचनम्-येषांचक्राङ्कितंगात्रंशूद्रेष्वपिचदृश्य
ते। तेवैस्वर्गस्यनेतारोब्राह्मणाभुविदेवताइति॥१६५॥
तत्रैवान्यत्रभगवद्दिव्यायुधमाहात्म्यप्रकरणउ
क्तम्- चतुर्वेदाधिकोयस्तुशङ्खचक्रादिचिह्नितः।
सगृहेयद्गृहस्थस्यतस्यकिंकुरुतेयमः। किंकरि
ष्यसिभूपालप्रयागमरणेनवा। चक्राङ्कितश
रीरस्य गृहेमुक्तिःप्रकीर्तिता। दृष्ट्वाचक्राङ्कितं
देहं मरणे समुपस्थिते। यमदूताःपलायन्तआ
गच्छन्ति हरेर्गणाः। कृष्णायुधाङ्कितंदेहंचेष्ट
तेयत्र कुत्रवै स्मशानमपित च्छुद्धं किंपु
नःपुण्यभूमयः। सुदर्शनोनामराजाशत्रुभिश्च

पराजितः। हृतराज्यः क्षीणबलो भरद्वाजमुवाच ह।
राजोवाच ॥ ब्रूहि विप्र जयो मह्यमीदृशस्य भवेत्क
थम् ॥ भरद्वाज उवाच ॥ वक्ष्यामि शृणु राजेन्द्र त
व राज्यं यथा भवेत्। वृत्रेण निर्जितास्सर्वे पुरा दे
वास्सवासवाः। हृतं राज्यं बलाद्दैत्यैर्देवास्सर्वे ज
नेश्वर। ब्रह्मादयोग्नयस्सर्वे शङ्कर प्रमुखास्तथा।
शरण्यं शरणं जग्मुर्नारायणमनामयम् ॥ देवा ऊचुः॥
त्राहि त्राहि जगन्नाथ वृत्रेण निहता वयम्। त्रैलो
क्याधिपतिर्जातो वृत्रो निर्जितकण्टकः। यथा
बाधो न चास्माकं तथा कुरु जनार्दन ॥ श्रीभगवा
नुवाच ॥ ममायुधैस्स्वदेहांस्तु लाञ्छयित्वा सुरो
त्तमाः ॥ युध्यतां समरे दैत्यैर्मत्प्रसादेन भूयसा।
ममायुधाङ्कितैर्देहैर्भवतां सुरशत्रवः। क्षयं या
स्यन्ति समरे ष्वनायासेन लीलया। एवमुक्ते प्र
पोमुक्तं ब्रह्मरुद्र पुरोगमाः। तप्तचक्राद्यायुधैस्ते
चिह्नं देहिष्वतन्द्रिताः। धारयन्तो मुदा युक्ता हृ
ष्टस्य जयकाङ्क्षिणः। हत्वा वृत्रं गता देवास्स्वस्थानं
च मुदान्विताः। ततः प्रभृति ब्रह्माद्यास्सर्वे देवा

स्सवासवाः। चिह्नं कृत्वायुधैर्देहे कर्मचक्रुरतन्द्रि-
ताः। ऋषयस्सिद्धगन्धर्वाः पाताले पन्नगेश्वराः दे
हे कुर्वन्ति चिह्नानि शङ्खचक्रगदादिभिः। तस्मात्त्व
मपि राजेन्द्र कुरु कृष्णायुधाङ्कितम्। स्वदेहं सर्व
सङ्ग्रामेष्वजेयस्त्वं भविष्यसीत्यादि ॥ अन्ते-इति
श्रुत्वा व्यासशिष्या न्नैमिशारण्यवासिनः। मुदा
संपूज्य ते सूतं चक्रं धृत्वा ययुर्हरिमिति ॥ अन्यत्र-
गोविन्दस्यायुधान्यङ्कै बिभ्रत्सु श्रोणिवै द्विजः। तुरी
यं धामतद्विष्णोर्महिष्ठःप्राप्नुयादिति। चमूपच्छये
नश्शकुनो बिभृत्वेति ऋग ब्रवीदिति च ॥१६६॥
एवमुपपुराणेषु ब्रह्माण्डसंहिताभेदरूपे वायव्य
पुराणे प्रोक्तम्। उपवीतादि वद्धार्याश्शङ्खचक्रा
दयस्सदा। ब्राह्मणस्य विशेषेण वैष्णवस्य विशेष
त इत्यादि ॥१६७॥ आदित्यपुराणेप्युक्तम्-च
क्रादि धारये द्विप्रो ललाटे मस्तके भुजे। पातका
दि विशुद्ध्यर्थं भवक्लेश विनाशनम्। विहगेशेशना
माङ्कास्शङ्खचक्राङ्किता नराः। निश्शङ्काश्च निरा
तङ्कास्ते संकर्षण किङ्कराइत्यादि ॥१६८॥ एवं

शास्त्रान्तरेषु शिल्पशास्त्रेऽप्युक्तम् – भुजे चक्रं द्विजातीनां शिरश्चक्रन्तु दैवतम्। अचक्र द्विजदेवानां पूजादानञ्च निष्फल मिति ॥१६९॥ यत्पुनरुक्तम् – ज्योतिःशास्त्रे बार्हस्पत्ये मुहूर्त विधाने – जातस्य तु कुमारस्य धारयेत्सप्तमे दिने। चक्रं कृत्वा सुवर्णेन षडरम्मम्नसंयुत मिति ॥ सङ्ग्रहेष्वपि – जातस्य पञ्चमदिने शुभदे मुहूर्ते पञ्चायुधाभरण धारण मिष्ट माहुः। नाभिप्रदेशपरिलम्बिसुवर्णसूत्रप्रोतं शिशोर्ग्रहनिवारणकैश्च युक्त मिति ॥ जन्मतः पञ्चमीं तारां याते चन्द्रे शिशुं पिता। भूषयेद्भूषणैस्सर्वैः पञ्चायुधसमन्वितैः। विशेषात्कन्यकायास्तु कर्तव्यं मङ्गलं यच्च। पुंसस्सायुधमाकल्पमायुश्श्रीकाङ्क्षिणः – श्शिशोरिति च ॥१७०॥ तदेतत्पूर्वोदाहृत प्रमाणगणसिद्धादङ्कनहेतुतापसंस्कारादर्थान्तरं बालग्रहनिवारणाद्यर्वाचीनफलान्तरहेतुतया विहितं प्रागुदाहृतपाद्मसंहिताशाण्डिल्यस्मृत्यादिवचनेष्विवेति नैतेन चक्राङ्कनपरशास्त्राणां चरितार्थता सम्भावयितुं शक्या॥ १७१॥ यतः परविद्याविशे

षाङ्ग मिदं चक्राद्यङ्कनं सावित्रीग्रहणाङ्ग यज्ञोपवी
तादिधारणवदेव नियतस्संस्कार विशेषः ॥१७२॥
अत एवञ्च प्रागुदाहृत प्रमाणेष्वसम्भावितार्था
न्तरा अस्य संस्कारविशेषस्य प्रयोगभेदा अपि
बहुलमुपलभ्यन्ते ॥१७३॥ बह्वृचपरिशिष्टगत
शौनकीयस्तापसंस्कारकल्पोपिच तावदेवं दृश्य
ते ॥ षोडशोपचारैर्मूलेन भगवन्तमभ्यर्च्य - ऋ
चो अक्षरे परमे व्योमन् - शन्नोमित्रश्शंवरुणः ।
इत्येताभ्यांचक्रं शङ्खं चाभ्यर्च्य - द्वादशारं न हितं
ज्वराय - अग्नेमन्वे प्रथमस्य प्रचेतसः = इत्येता
भ्यामग्ना वादध्यात् = वैश्वानरस्य सुमतौस्यामे
त्यग्निं परिच्चर्य पुरुषसूक्तेन षोडशाहुतीर्हुत्वा भग
वन्तं पुरुषसूक्तेनोपस्तुत्य - यो ब्रह्माण मिति पुरतो
दण्डवभिर्नमेत् - अथ - सुदर्शन महाज्वालको
टिसूर्य सम प्रभ । अज्ञानान्धस्य मे नित्यं विष्णो
र्मार्गं प्रदर्शये त्यादाय = सुदर्शनाय विद्महे महाज्वा
लाय धीमहि तन्नश्चक्रः प्रचोदयादिति चक्राधा
नम् - पाञ्चजन्य निज ध्वानध्वस्तपातक सञ्च

य। पाहि मां पापिनं घोरसंसारार्णवपातिन मित्यादाय-पाञ्चजन्याय विद्महे पावमानाय धीमहि तन्नश्शङ्खः प्रचोदया दिति शङ्खधानम् - य एवं कुरुते विद्वान् ब्राह्मणश्श्रोत्रियश्शुचिः। सर्वपापैः प्रमुच्येत विष्णु लोकं च गच्छति ॥ शयन्यां चैव बोधिन्यां चक्रतीर्थे तथैव च। शङ्खचक्र विधानेन वह्निपूतो भवेन्नर इति ॥१७४॥ अयं च कल्पो रामार्चनचन्द्रिकायां पञ्चम पटले - आनन्दवनसन्न्यासिना - रामनाममाहात्म्ये षष्ठ प्रकरणेऽच्युताश्रमसन्न्यासिनापि चोदाहृतः ॥१७५॥ एवं रामार्चनचन्द्रिका रामनाम माहात्म्यादि ग्रन्थेषु श्रुतिस्मृति पुराणादि वचनोदाहरणेन तप्तचक्राद्यङ्कनं स्थापितम्॥१७६॥ तथा च पूर्वोदाहृत प्रमाणगणै रनन्यथा सिद्धैर्विधानान्मतान्तरस्थ प्राचीनग्रन्थकारैरपि निरूपणाच्चार्वाचीनकुदृष्टिभिर विचाल्योऽयं तप्तसुदर्शनादि भगवद्दिव्यायुधलाञ्छन धारणविधि रिति सिद्धं भवति ॥१७७॥ ब्रह्मादि देवेषु सिद्ध गन्धर्वादिषु सनकसनन्दनादि महायोगिषु श्रीनारद च-

सिष्ठपराशरादिषु नैमिषारण्यवासिषु श्रीशौनकादिषु महर्षिषु च तप्तसुदर्शनादि भगवद्दिव्यायुधलाञ्छन धारणाचार आसीदिति च पाद्मस्कान्दभारतादि प्रागुदाहृत प्रमाणगणेषु बृहद्ब्रह्मसंहितादिषु च प्रस्फुटं दृश्यते ॥ १७८ ॥ स चायमाचारोऽद्यतनेष्वपि वैदिकाग्रेसरेषु लोकमान्येषु शिष्टेषु निराबाधमनुष्ठानगोचरो दृश्यते ॥ १७९ ॥ यद्यपि पूर्वोदाहृताः प्रमाणगणा नैवोपलभ्येरन्-तथाप्यविच्छिन्नपारम्पर्यवैदिकाग्रेसरलोकमान्यशिष्टगोष्ठीष्वनुष्ठानगोचरोऽयमाचार एक एव निर्विशङ्कमस्य धर्मस्यानुष्ठाने नन्यथासिद्धं प्रमाणं भवितुमर्हत्यास्तिकानामिति नात्र विचिकित्सालेशावकाशः ॥ १८० ॥ ईदृशोऽह्याचारः प्रकारान्तरेण स्वप्रसङ्गमसहमानस्स्वस्य पारमार्थिकप्रमाणमूलतानिश्चयमविचाल्यमापादयति ॥ १८१ ॥ अत एव हि — वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् । आचारश्चैव साधूनामात्मनस्तुष्टिरेव चेत्यादि मन्वादिधर्मशास्त्रेषु प्रमाणान्तरैस्स

हशिष्टाचारोपिपृथक्प्रमाणतयापरिगणितः ॥१८२॥ पूर्वतन्त्रे होलाकाधिकरणन्यायोपिहीदृशाचारस्यप्रमाणतांव्यवस्थापयति ॥१८३॥ इत्थंस्वतएव प्रमाणतया माननीयः पारम्पर्यतोवैदिकाग्रेसरलोकमान्यशिष्टगोष्ठीषु परिदृश्यमानोयमाचारोनन्यथासिद्धपरस्सहस्रप्रमाणगणसोपष्टम्भस्सुतरामेवनकेनापिचालयितुशक्यइतिनिराबाधएवायंवैदिकसार्वभौमघण्टापथः ॥१८४॥ तमेनमाचारमुन्मूलयितुंयतमानंमदकलुषमतिंकञ्चनमन्दमतिंमहामेरुमुत्पाटयितुंचेष्टमानम्मत्तमहिषमिवप्रेक्षावन्तस्स्वतएवपरिहरन्तीत्यलंबहुनोपन्यासेन ॥१८५॥ तथाचप्रागुदाहृतप्रमाणगणैर्बहुभिर्हेतुभिश्च ब्राह्मणादीनांसर्वेषाम्मुमुक्षूणांचावश्यकंतप्तसुदर्शनादिभगवद्दिव्यायुधलाञ्छनधारणमितिसिद्धम् ॥१८६॥ अयमत्रतदावश्यकताहेतुसङ्ग्रहश्लोकः पूर्वाचार्यकृतः ॥ लक्ष्मत्वादात्मभर्तुःप्रकृतिपरिणतिग्रन्थिदाहात्मकत्वात्कर्माङ्गत्वाङ्कितत्वान्तनुतनुशययोस्संस्कृतित्वान्नियत्वात् । हेतुत्वा

त्सङ्गृहीते रितरपरिहृते द्रविणात्किं ङ्कुरादेर्धार्यं चक्रादि चिह्नं कृतिभिरकृतिभिश्श्रेयसे मुक्तये चेति ॥१८७॥ इदमत्रावधेयम् - आत्मभर्तुर्लक्ष्म त्वादिति स्वामिचिह्नस्यदासेनदास्यलक्षणतयाऽवश्यधार्यत्वं प्रतिपाद्यते - इदंच - निरूपणत्वाद्दास्यस्य धार्यचक्रमहात्मनः ॥ दासभूतं यदात्मानं बुध्येतपरमात्मनः। तदैवगात्रं कुर्वीत शङ्खचक्रादिलाञ्छितम् ॥ इत्यादिभिः प्रमाणैः प्रागुपपादितम् - प्रकृतिपरिणतिग्रन्थिदाहात्मकत्वादित्यनेन - प्रकृतिपरिणतेः - अनादिकर्मपरंपरयासुदृढमात्मनि सम्बध्यमानस्य संसारतरुमूलस्थानीयस्य सूक्ष्माचिद्वस्तुनः - योग्रन्थिः - दुरुच्छेदस्सम्बन्धविशेषः - तद्भस्मीकरणरूपतया तप्तचक्रादिचिह्नं धार्यमित्युच्यते - यथाहरितपत्रशाखाप्रकाण्डस्तरुस्तदीयप्रधानमूलच्छेदे पत्रशाखादिषु किञ्चित्कालपर्यन्तं हरिततानुवर्तनेपिक्रमेण शुष्यत्येवनतुवर्धते। तथैवतप्तचक्रादिभगवद्दिव्यायुधदग्धबीजस्संसारबन्धः किञ्चित्कालमनु

वर्तमानोपिक्रमेण शोषमेवोपैति न तु पोषमितीत्थं संसार तरु मूलदहनरूपं तप्तचक्राद्यङ्कनं सर्वैर्मुमुक्षुभिरवश्यं धार्यमित्याशयः - अतएव हि श्रूयते रहस्याम्नाये - न खलु भागवता यम विषयं गच्छन्तीति - तप्तचक्राद्यङ्कनस्य संसार तरुमूलदहन रूपता च - अतप्ततनूर्नतदामो अश्नुते शृतास इद्वहन्तस्तत्समाशत ॥ आ माद्यत प्रतनवस्त्र प्राङ्ना हरिलाञ्छनैः । शृतास्सु भोग्यतां प्राप्य भुज्यन्ते परमात्मना ॥ इत्यादि प्रागुदाहृत प्रमाण सिद्धा = कर्माङ्गत्वाद्धितत्वादित्यनेन = अङ्गत्वात्सर्व धर्माणाम् = अनिष्टानां निवृत्त्यर्थमेकान्त्या यजगत्सतेः - सिद्धमर्थं कर्मणां चैव धार्यं चक्रादि लाञ्छनमित्यादि प्रागुदाहृत प्रमाणसिद्धात्कर्माङ्गत्वादनिष्टनिवर्तकत्वलक्षणाद्धितत्वाच्च हेतोरपि चक्राद्यङ्कनं धार्यमित्युच्यते = तनु तनु शययोस्संस्कृतित्वादित्यनेन = येनपूतस्तरति दुष्कृतानि - तेन पवित्रेण शुद्धेन पूताः - अति पाप्मानमरातिं तरेम = शङ्खचक्राङ्कितं गात्रं पवित्रमिति वै श्रुतिः ॥ अनायुधासो ह्यसुरानदे

वाइतिवै श्रुतिः। इहामुत्रच तेषांवा आसुरो भाव उच्यते। आसुरो विद्यते भावो यावदेषां दुरात्मनाम्। नतावदधिकारोस्ति ममाराधनकर्मणि। नाधिकारोर्च्चने यावन्मोक्षाशा विद्यते कुतः। मुक्तिद्वारंत्वमेवात स्सहस्रारनिशामय। श्रद्धया धारयिष्यन्ति ममचक्रं सुदर्शनम्। ज्ञात्वा सर्वपदार्थेषु शुद्धिस्तेषां पदे पदे। शालायां भाजने वस्त्रे गृहोपकरणेषु च। चमसोलूखले पीठे पक्वान्ने चक्रमुल्लिखेत्। पशुपुत्रकलत्रेषु यानवाहनभूमिषु। सुदर्शनतवाङ्केन प्राकृतत्वं प्रयास्यति॥ विरक्तोवा गृहस्थोवा सकामोऽकामएवच। तापादिना विमुच्येत पातकैः कोटिजन्मजैः। एषावैष्णव सिद्धान्ते संस्क्रिया परमा मता। सुदर्शनाग्निना तस्य शरीरं यद्धि शोध्यतइत्यादि प्रागुदाहृत प्रमाणगण सिद्धाच्छरीर संस्काररूपत्वाच्छरीर वर्तिपुरुषसंस्काररूपत्वाच्च हेतोरपि तप्तचक्रादि लाञ्छनमवश्यधार्य मित्युच्यते = इत्थं तप्तचक्रादि लाञ्छनधारणस्य कर्माङ्गत्व संस्काररूपत्वादिकं प्रतिपा

द्यतेन विना मोक्षाशा नैव विद्यत इति स्फुटं प्रति
पादयद्भिः प्रमाणगणैः - तप्तचक्रादिलाञ्छनधा
रणनिर्बन्धोऽनावश्यकः - तेन विनैव केवलं क्रि
यमाणया भगवद्भक्त्यैवाभीप्सितसिद्धेरितिव-
दतां दुर्वादिनां दुराशापि दूरोत्सारिता - अङ्ग
भूततप्तचक्रादिलाञ्छनलक्षणसंस्कारं विना
ऽङ्गिभूताया भगवन्मन्त्रग्रहण भगवद्यजनभ
जनादिरूपाया भक्तेरनिष्पत्तेः - अन्यथा यज्ञो
पवीतादि धारणादिलक्षणोपनयनसंस्कारेण
विनैव सावित्रीग्रहणवेदाध्ययनवैदिककर्मा
नुष्ठानादिनिष्पत्तिप्रसङ्गात् - इष्टापत्तौ चाङ्गभू
तसंस्कारविधानवैयर्थ्यप्रसङ्गाच्च = अतएव
हि - अग्निहोत्रं यथा नित्यं वेदस्याध्ययनं यथा।
ब्राह्मणस्य तथा नित्यं तप्तचक्राङ्कधारणम्॥
उपवीतादिवद्धार्यो शङ्खचक्रादयस्सदा। ब्राह्म
णस्य विशेषेण वैष्णवस्य विशेषतः॥ अतप्तत
नूर्न तदामो अश्नुते॥ इत्यादि प्रागुदाहृतप्र
माणगणैर्ब्राह्मणान् प्रतियज्ञोपवीतादिधार

णस्यैव तप्तचक्रादिलाञ्छनधारणस्यापिनित्यत्वं
प्रतिपाद्यते - प्रतिपाद्यतेच तापादिसंस्काररहि
तस्यान्यांशयुक्तस्यापिदास्यप्रच्युतिः स्पष्टम्-
अपिससेवनपरो नचेत्तापादिसंस्कृतः। अन
र्चार्हतया विष्णोर्दास्यात्प्रच्यवते ध्रुवमितिभ
रद्वाजसंहितापरिशिष्टप्रथमाध्यायवचनेन=
प्रियत्वादित्यनेन - धार्मिकास्तिकाग्रेसरशिष्ट
जनानामन्तःकरणप्रियतयाभासमानत्वेना
प्यविकम्प्यस्य धर्मत्वनिश्चयस्य सम्भवादस
न्दिग्धमिदमनुष्ठेयमित्युच्यते = इदमप्युक्तंहि-
वेदः स्मृतिस्सदाचारस्स्वस्य च प्रियमात्मनः।
एतच्चतुर्विधं प्राहुस्साक्षाद्धर्मस्यलक्षणम् ॥
श्रुतिः स्मृतिस्सदाचारस्स्वस्य च प्रियमात्मनः।
सम्यक्सङ्कल्पजः कामो धर्ममूलमिदं स्मृतम्॥
इत्यादिमनुयाज्ञवल्क्यादिधर्मशास्त्रेषु ॥ सद्गृ
हीतेरितरपरिहृतेश्चहेतुत्वादित्यनेन - भगव
द्भक्तानां सतां तादृशैरेवसह संसर्गस्यकर्तव्य
तायाअतादृशैस्सह संसर्गस्य परिहर्तव्यताया

श्चशास्त्रसिद्धतया - तप्तचक्रादिलाञ्छनधार
णादिलक्षणानिदृष्ट्वा - अयमस्मद्गोष्ठ्यर्हइतिसं
तांपरिग्रहंप्रति - अयमस्मत्संसर्गासहिष्णुरतोना
स्मद्गोष्ठ्यर्हइत्यसतांदूरगमनंप्रतिचहेतुत्वाच्चे
दमनुष्ठेयमित्युच्यते = अवैष्णवोदुराचारःपापा
नामाकरोऽशुचिः। पापचारीदुरात्माचतस्मात्तं
परिवर्जयेत्। अवैष्णवस्यसंसर्गोदोब्राह्मण्यंक
रोतिहि। तस्मात्प्राकृतसंसर्गंवर्जयेद्वैष्णवोनर
इत्यादिप्रागुदाहृतप्रमाणैः = नचमैत्रींप्रकु
र्वीतवैष्णवःप्राकृतैःसह - कायमच्युतसत्का
त्प्राकृतेविषयचञ्चलाः। असतांगुणकर्मादि
नानुमोदेतकिञ्चन। स्मरणादपियत्तेषांमह-
द्भवतिकिल्बिषम्। विशिष्टःपरमैकान्तीज्ञा-
नवैराग्यभक्तिभिः। तादृशैरेवकुर्वीतसहसंक
थनादिकम्। उक्तान्येतानिसर्वाणियोवमन्ये
तमूढधीः। सएषतमसोनैतिपारमैकान्त्यवर्जि
तइतिभारद्वाजसंहितान्यासोपदेशचतुर्थाध्या
यवचनैरेवंजातीयकैरन्यैश्चबहुभिर्वचनैस्सतां

परमैकान्तिनां तादृशैरेव संसर्गस्य कर्तव्यता ऽन्यादृशैस्संसर्गस्य परिहर्तव्यता चाभिहिता बोद्धव्या - मुनयस्सत्वनिष्ठानां लक्षणानि निबोधत। विष्णोर्दास्यैकफलता तदेकोपायता स्थितिः। तदाज्ञाकरणे प्रीतिस्तत्कर्मगुणकीर्तनम्। तच्चिह्नाङ्कितदेहत्वं तदीयाराधने रतिरित्यारभ्य - इत्येतैर्लक्षणैर्युक्ता वैष्णवा वीतकल्मषाः। सभाज्या दर्शनेनैव नावज्ञेयाः कथञ्चनेति भारद्वाजसंहिता परिशिष्ट प्रथमाध्याय वचनैः - भगवद्भक्तानां चक्रादि चिह्नधारित्वादि लक्षणान्यवलोक्य सत्करणीयता चाभिहिता ऽऽनुसन्धेया - किङ्करादेद्रावणादित्यनेन - तव गतिरथवा ममास्ति चक्रप्रतिहतवीर्यबलस्य सोऽन्यलोक्यः॥ भवतां प्रमता मत्र विष्णुसंश्रय मुद्रया। विज्ञाना भङ्गकृन्नैव कश्चिदत्र भविष्यति॥ अङ्कितः क्वचिदप्यङ्गे चक्रेणैव केवलम्। अनिष्टानान्तु भूतानां न तावद्वशगो भवेत्॥ लक्षणानि स्फुटान्येव कि

यासिद्धिकराणितु। धारयन्नोपहन्येतकदाचि
त्किङ्करादिभिः॥ मच्चक्राङ्कितदेहोयोमद्भक्तो
भुविदुर्लभः। नैवाप्नोतिवशंमृत्योरप्याज्ञाभङ्ग
कृन्नरः। वैष्णवेभ्योबिभ्यतिहिदेवानरकरक्षकाः॥
यमदूताः पलायन्त आगच्छन्तिहरेर्गणाः॥ इत्या
दिप्रागुदाहृतप्रमाणावगतात् - यमवश्यतादू
रीकरणपूर्वकात्मत्युतयमतत्किङ्करद्रावणका
रित्वाच्चहेतोर्भगवद्दिव्यायुधलाञ्छनधारणमा
वश्यकमित्युच्यते = कृतिभिरकृतिभिरित्यादि
ना - उपायान्तरानुष्ठानकुशलानामकिञ्चना
नन्यगतीनाञ्चविशेषेणावश्यमिदमनुष्ठेयम् -
अन्यथापरमाभ्युदयनिश्श्रेयसयोरसिद्धेरित्यु-
च्यते = तप्तचक्राङ्कनं विष्णोरेकादश्यामुपोष
णम्। धृतोर्ध्वपुण्ड्रदेहत्वं तन्मन्त्राणांपरिग्रहइ
त्यारभ्य - आनृशंस्यंसतांसङ्गः पारमैकान्त्य-
हेतवइत्यन्तमुक्त्वा - वैष्णवः परमैकान्तीनेतरो
वैष्णवस्स्मृतः। नावैष्णवोव्रजेन्मुक्तिंबहुशास्त्र
श्रुतोपिवा। वैष्णवोवर्णबाह्योपियातिविष्णोः

परंपदमितिह्युक्तम् बृहद्धारीतस्मृतावष्टमाध्याया न्ते ॥ अस्मिन्हि विधृते देवा महोन्नत पदं ययुः॥ देवासः पितरो येन विधृतेन बाहुना सुदर्शनेन प्र यतास्स्वर्गलोकमायन्। येनाङ्किता मनवो लोक सृष्टिं वितन्वन्ति ॥ इत्यादि प्रागुदाहृतप्रमाणै रतिशयिताभ्युदयहेतुत्वमपि ह्यस्य प्रतिपाद्य- ते ॥ तस्मादुक्तैर्हेतुभिस्सर्वैरावश्यमेव धार्यं भ गवद्दिव्यायुधलाञ्छनमास्तिकैरिति सिद्धं भव तीति ॥१८८॥ एवं यथोक्तलक्षणवैष्णवदीक्षा या नानाप्रकारैरन्यावश्यकत्वमन्यथा प्रत्यवाय बाहुल्यं संसारात्कदाचिदप्यनिस्तारो मोक्षहेतु परविद्यानधिकारश्चेत्येवमादिकं सन्मार्गदीपे स मर्थितमसप्रपञ्चम् ॥१८९॥ तत्तत्रैव द्रष्टुं शक्य मितीहोपरम्यते बहुलोपन्यासात् १९०॥

इति श्रीभगवद्धर्मदर्पणे श्रीपञ्चरात्रसंहि तास्मृतीतिहासपुराणादिगततप्तचक्राङ्कनपर प्रमाणनिरूपणं नाम पञ्चमः परिच्छेदः ॥५॥